# संस्कृतव्याकरणम्

(संस्कृत-शास्त्रम्)

ऐच्छिकम्

कक्षा ९ – १०



# संस्कृतव्याकरणम्

## (संस्कृतशास्त्रम्)

### ऐच्छिकम्

नवमदशमकक्षयोः कृते

### भाग दुई

प्रकाशक
जनक शिक्षा सामग्री केन्द्र लिमिटेड
सानो ठिमी, भक्तपुर

# विषयसूची

# अथ विभक्त्यर्थाः[1]

## (कारकप्रकरणम्)

**प्रातिपदिकार्थ– (२) लिङ्ग–परिमाण–वचनमात्रे प्रथमा २।३।४६**

नियतोपस्थितिकः (३) प्रातिपदिकार्थः। मात्रशब्दस्य प्रत्येकं योगः। प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये परिमाणमात्रे सङ्ख्यामात्रे च प्रथमा। प्रातिपदिकार्थमात्रे–उच्चैः। नीचैः। कृष्णः। श्रीः। ज्ञानम्। लिङ्गमात्रे–तटः। तटी। तटम्। परिमाणमात्रे–द्रोणोव्रीहिः (४)। वचनं=सङ्ख्या। एकः। द्वौ। बहवः।

---

१– "ङ्याप् प्रातिपदिका' दित्यधिकृत्य 'स्वौजसमौ' डित्यादिना ङ्याप् प्रातिपदिकेभ्यः स्वादिप्रत्ययाः (प्रथमादिसप्तम्यन्ताः सप्त विभक्तयः) सप्रपञ्चं निरूपिताः। अथेदानीं सप्तानामपि विभक्तीनामर्थविशेष व्यवस्थार्थं विभक्त्यर्थप्रकरणमारभ्यते। प्रायः कारकाधिकारात्कारकप्रकरणमपीदमेव। २– प्रातिपदिकार्थश्च लिङ्गं च परिमाणं च वचनं चेति द्वन्द्वः। द्वन्द्वान्ते श्रूयमाणत्वात् मात्रशब्दस्य प्रत्येकमभिसम्बन्धः। मात्रशब्दार्थश्चावधारणम्। तेन प्रातिपदिकार्थलिङ्ग परिमाणवचनान्येव प्रातिपदिकार्थलिङ्ग परिमाणवचनमात्रम्–इत्यस्वपदविग्रहः। ३– **स्वार्थोद्रव्यञ्च लिङ्गञ्च सङ्ख्या कारकमेवच। अमी पञ्चैव नामार्थास्त्रयः केषाञ्चिदग्रिमाः॥** इति प्रातिपदिकार्थपञ्चकसिद्धान्ते त्रिकसिद्धान्ते चापि लिङ्गस्य नामार्थत्वात्=प्रातिपदिकार्थत्वात् पृथग्ग्रहणं व्यर्थमेवेत्याशङ्क्य प्रकृते विवक्षितं प्रातिपदिकार्थं निरूपयति नियतेति। यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः सोऽत्र प्रातिपदिकार्थो विवक्षितः इत्यर्थः।

४– न चेह प्रातिपदिकार्थमात्रे– इत्येव प्रथमास्त्विति वाच्यम्, तथासति द्रोणरूपपरिमाणस्य व्रीहेश्च द्वयोरपि प्रातिपदिकार्थत्वेन=नामार्थत्वेन 'नामार्थयोरभेदेनान्वयः' इति न्यायात् द्रोणाभिन्नो व्रीहिरित्यनिष्टार्थलाभे द्रोणरूपपरिमाणस्य परिच्छेद्यपरिच्छेदकभावविधयाऽन्वयो नस्यात्। परिमाणार्थे पृथक् प्रथमाविधाने तु प्रत्ययार्थे परिमाणसामान्ये प्रकृत्यर्थो=द्रोणशब्दार्थो विशेषपरिमाणभेदेन संसर्गेण विशेषणम। द्रोणाभिन्नं यत्परिमाणमित्यर्थः। तस्य च परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणतयाऽन्वयस्तथा चायमर्थः– द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नोव्रीहिरिति।

**चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः।**
**आढकैस्तैश्चतुर्भिस्तु द्रोण इत्यभिधीयते॥**

**सम्बोधने च (१) २।३।४७**

प्रथमास्यात् । हे राम !

**कर्तुरीप्सिततमं कर्म १।४।४६**

कर्तुः क्रिययाप्तुमिष्टतमं कारकं (१) कर्मसंज्ञं स्यात् ।

**कर्मणि द्वितीया २।३।२**

अनुक्ते । हरिं भजति । अभिहिते तु कर्मादौ प्रथमैव। अभिधानं च प्रायेण तिङ कृत्तद्धितसमासैः । हरिः सेव्यते ।

लक्ष्म्या सेवितो हरिः । शतेन क्रीतः शत्यः अश्वः ।

प्राप्तानन्द श्चैत्रः । क्वचिन्निपातेनाभिधानम् । 'क्रमादमुं नारद इत्यबोधि सः।'

**अकथितंच १।४।५१**

अपादानादि विशेषै रविवक्षितं कारकं कर्मसंज्ञं स्यात् ।

"दुह्याच् (२)–पच्–दण्ड्–रुधि–प्रच्छि–चि–ब्रू–शासु–जिमन्थ–मुषाम् । **कर्मयुक्स्यादकथितं तथा स्यान्नी–हृ–कृष्वहाम्** । गां दोग्धि पयः। (३) बलियाचते वसुधाम् । तण्डुला नोदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते, शास्ति वा। शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मन्थाति । देवदत्तं शतं मुष्णाति । ग्राम मजां नयति हरति कर्षति वहति वा। अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि ।

---

१– सम्बोधनम्=स्वाभिमुखीकृत्य ज्ञापनम्।२– कारकेइत्यधिकारादिदं लभ्यते। कारकत्वं च क्रियाजनकत्वम् । करोति=क्रियां निर्वर्तयतीति भाष्ये व्युत्पत्तिदर्शनात् । कारकाणि च षट्:–

**कर्ताऽथ कर्म करणं सम्प्रदानं तथैव च ॥**

**आपादानाधीकरणे इत्याहुः कारकाणि षट् ।**

क्रियां प्रति जनकत्वाभावेन षष्ठीकारकत्वेन न व्यवह्रियते ।

२– दुह्यादीनां द्वादशानां धातूनां तथा नीहृकृष्वहां चतुर्णां मुख्यकर्मणा यद् युज्यते (अपादानादि) तदेवाऽकथितं कर्मेति परिगणनार्थः। तेन च एत एव धातवो द्विकर्मका इति सिद्धम् ।

३– पयः कर्मकं गोसम्बन्धि दोहनमर्थः । पयोऽत्र मुख्यं कर्म कर्तुरीप्सिततमत्वात्, गोश्चावधित्वेन प्राप्तस्यापादानत्वस्याऽविवक्षणादकथितकर्मत्वम्=गौणकर्मत्वम् । एव मन्येष्वपि। द्विकर्मक धातुषु एकस्य मुख्य कर्मत्वमपरस्य अपादानाद्यविवक्षायां गौणकर्मत्वं ज्ञेयम् । मुख्यकर्मणि 'कर्तुरीप्सिततमं कर्मे' ति कर्मसंज्ञायां गौणकर्मणितु अकथितं चेति **कर्मसंज्ञायामु**भयत्र' कर्मणि द्वितीये' ति द्वितीया विभक्तिरिति ज्ञेयम् ।

(अकर्मक धातुभिर्योगे देशः कालो भावो गन्तव्यो ऽध्वा च कर्मसंज्ञक इति वाच्यम्) कुरून् स्वपिति । मास मास्ते । गोदोह मास्ते । क्रोश मास्ते ।

## गति–बुद्धि–प्रत्यवसानार्थ–शब्दकर्माकर्मकाणा मणि कर्ता स णौ १।४।५२

गत्याद्यर्थानां शब्दकर्मकाणा मकर्मणां चाणौ यः कर्ता स णौ कर्म स्यात् ।

> "शत्रू नगमय त्स्वर्गं वेदार्थं स्वान वेदयत्
>
> आशय च्चामृतं देवान् वेद मध्यापयद्विधिम्॥
>
> आसयत् सलिले पृथ्वीं यः समे श्रीहरि र्गतिः ।"

(नीवह्योर्न (१) ) नाययति वाहयति वा भारं भृत्येन । (नियन्तृकर्तृकस्य (२) वहे रनिषेधः) वाहयति रथं वाहान्सूतः । आदिखाद्योर्न (३) आदयति खादयति वा मन्नं वटुना। (भक्षे रहिंसार्थस्य न (४)) भक्षयत्यन्नं वटुना। अहिंसार्थस्य किम् ? भक्षयति बलीवर्दान् सस्यम् (५) । (जल्पति प्रभृतीना मुपसंख्यानम् (६)) जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः । (दृशेश्च ७) दर्शयति हरिं भक्तान् । (शब्दायतेर्न ८) शब्दाययति देवदत्तेन ।

## हृक्रोरन्यरस्याम् १।४।५३

हृक्रोरणौ यः कर्ता स णौ वा कर्म स्यात् । हारयति कारयति भृत्येन भृत्यं वा कटम् । (अभिवादिदृशोरात्मने पदे वेति वाच्यम्) अभिवादयते दर्शयते देवं भक्तेन भक्तं वा ।

---

१– प्रापणमपि गत्यन्तर्गतमिति गत्यर्थत्वेन पूर्वसूत्र प्राप्तं कर्मत्वमनेन निषिध्यते। ण्यन्तयोरनयोः प्रयोज्य कर्तुर्नकर्मत्वमित्यर्थः । कर्मत्वाभावे प्रयोज्यकर्तुरनुक्तत्वात् तृतीया ।

२– नियन्तृकर्तृकस्य च वहेर्न निषेधः । प्रयोज्यकर्तुः कर्मत्वं भवत्येवेत्यर्थः ।

३– प्रत्यवसानार्थत्वात् कर्मत्वे प्राप्ते निषेधार्थमाह आदिखाद्योर्न इति।

४– अहिंसार्थस्य भक्षधातोः प्रयोज्यकर्तुः कर्मत्वं नेत्यर्थः ।

५– क्षेत्रे प्ररूढं हरितमलूनं सस्य मुच्यते, तस्यामवस्थायां तस्य चेतनत्वात् तद्भक्षणं हिंसैवेति भावः।

६– एतेषामणौ यः कर्ता स णौ कर्मस्यादिति वक्तव्यमित्यर्थः ।

७– दृश्धातोरपि–अणौ यः कर्ता स णौ कर्मस्यादिति वक्तव्यमित्यर्थः ।

८– धात्वर्थसङ्गृहीत कर्मकत्वेनाऽकर्मकत्वाद् 'गति बुद्धी' ति प्राप्तं कर्मत्वमनेन निषिध्यते ।

**अधिशीङ्स्थासां कर्म १।४।४६**

अधिपूर्वाणामेषामाधारः (१) कर्मस्यात् । अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ।

**अभिनिविशश्च १।४।४७**

अभिनीत्येतत्संघातपूर्वस्य विशते राधारः कर्म स्यात् । अभिनिविशते सन्मार्गम् । क्वचिन्न । पापेऽभिनिवेशः ।

**उपान्वध्याङ्वसः १।४।४८**

उपादिपूर्वस्य वसते राधारः कर्म स्यात् । उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः ।

अभुक्त्यर्थस्यतु न । वने उपवसति ।

'उभसर्वतसोः (२) कार्या धिगुपर्या दिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥

उभयतः कृष्णं गोपाः । सर्वतः कृष्णम् । धिक् कृष्णाऽभक्तम् । उपर्युपरि लोकं हरिः । अध्यधि लोकम् । अधोऽधोलोकम् । ऋते कृष्णम् । (अभितः–परितः–समया (३)–निकषा–हा–प्रतियोगेऽपि) अभितः कृष्णम् । परितः कृष्णम् । ग्रामं समया । निकषा लङ्काम् । हा कृष्णाऽभक्तम् । बुभुक्षितं न प्रतिभाति किञ्चित् ।

**अन्तरान्तरेण युक्ते २।३।४**

द्वितीया । अन्तरा त्वां मां वा हरिः । अन्तरेण हरिं

---

१– अधिकरणसंज्ञाऽपवादोऽयम् ।

२– अस्यायमर्थः– उपपदविभक्ति द्वितीयां श्लोकवार्तिकेन सङ्गृह्णाति उभसर्वतसोरिति । तसन्तस्य उभशब्दस्य सर्वशब्दस्य च प्रयोगे द्वितीया कार्या । यथा 'उभयतः कृष्णं गोपाः' । 'सर्वतः कृष्णं गोपाः' । धिक्शब्दप्रयोगे द्वितीया कार्या, यथा धिक् कृष्णाभक्तम्' । तथाऽऽम्रेडितान्तेषु उपर्यादिषु त्रिषु द्वितीया कार्या, द्विरुक्तस्य परंरूपमाम्रेडितम् तदन्तेषु कृतद्विर्वचनेष्विति यावत् (उपर्यादिषु त्रिषु इत्यत्र 'उपर्यध्यधः सामीप्ये' इति सूत्रोपात्तानि उपरि, अधि, अधः इति त्रीण्यव्ययानि गृह्यन्ते) उदाहरणत्रयं मूलेस्पष्टम् । ततोऽन्यत्रापि दृश्यते= उक्तप्रदेशेभ्योऽन्यत्रापि द्वितीया दृश्यते इत्यर्थः, तदुदाहरणं च 'ऋते कृष्णम्' इति ।

३– समया तथा निकषा=समीपे ।

न सुखम् ।

**कर्मप्रवचनीयाः (१) १।४।८३**

इत्यधिकृत्य ।

**अनुर्लक्षणे १।४।८४**

लक्षणे द्योत्ये अनुः कर्मप्रवचनीयसंज्ञः स्यात् । गत्युपसर्गसंज्ञापवादः ।

**कर्मप्रवचनीययुक्ते द्वितीया २।३।८**

जपमनुप्रावर्षत् । हेतु भूतजपोपलक्षितं वर्षणमित्यर्थः ।

**तृतीयार्थे १।४।८५**

अनु रुक्तसंज्ञः । नदीमन्ववसिता सेना । नद्यासह सम्बद्धेत्यर्थः ।

**हीने (२) १।४।८६**

अनुरुक्तसंज्ञः । अनु हरिं सुराः । हरेर्हीना इत्यर्थः ।

**उपोऽधिकेच १।४।८७**

अधिके हीने च उपेत्यव्ययं प्राग्वत् । (३) अधिके सप्तमी वक्ष्यते । हीने–उपहरिं (४) सुराः ।

**लक्षणेत्थं भूताख्यान–भाग-वीप्सासु प्रतिपर्यनवः १।४।९०**

उक्तसंज्ञाः स्युः । लक्षणे– वृक्षं प्रति पर्यनुवा विद्योतते विद्युत् । इत्थं भूताख्याने–भक्तो विष्णुं प्रति पर्यनु वा । भागे– लक्ष्मी हरिं प्रति पर्यनु वा । हरे र्भाग इत्यर्थः । वीप्सायाम्– वृक्षं वृक्षं प्रति पर्यनु वा सिञ्चति । एषु किम्? परिषिञ्चति ।

**अभिर भागे १।४।९१**

भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभिवर्तते । भक्तो हरिमभि । देवं देव मभिषिञ्चति । अभागेकिम्? यदत्र ममाभिष्यात्तद्दीयताम् ।

---

१– अन्वर्थेयं संज्ञा । कर्म=क्रियां प्रोक्तवन्त इति कर्मप्रवचनीयाः ।

२– हीनेऽर्थे द्योत्ये 'अनुः' कर्मप्रवचनीयसंज्ञ इत्यर्थः ।

३– कर्मप्रवचनीयसंज्ञमित्यर्थः ।

४– उत्कृष्टादेव द्वितीया शब्दशक्ति स्वभावात् ।

**सुः पूजायाम् १।४।९४**

सुसिक्तम् । सुस्तुतम् । अनुपसर्गत्वान्नषः । पूजायां किम् ? सुषिक्तं(१) किं तवात्र । क्षेपोऽयम् ।

**अति रतिक्रमणे च १।४।९५**

चात्पूजायामति रुक्तसंज्ञः स्यात् । अति देवान्कृष्णः (२) ।

**कालाध्वनो रत्यन्तसयोगे (३) २।३।५**

इह द्वितीया स्यात् । मासं(४) कल्याणी । मासमधीते । मासं गुडधानाः । क्रोशं कुटिला नदी । क्रोशमधीते । क्रोशं गिरिः । अत्यन्तसंयोगे किम्? मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः । स्वतन्त्रः कर्तेति कर्तृसंज्ञा ।

**साधकतमं करणम् १।४।४२**

क्रियासिद्धौ प्रकृष्टोपकारकं(५) करणसंज्ञं स्यात् ।

**कर्तृकरणयोस्तृतीया २।३।१८**

अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली । (प्रकृत्यादिभ्य उपसंख्यानम्) प्रकृत्या चारुः । प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । समेनैति । विषमेणैति । द्विद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून्गृह्णाति । सुखेन दुःखेन वा यातीत्यादि ।

**दिवः कर्म च १।४।४३**

दिवः साधकतमं कर्मसंज्ञंस्याच्चात्करणसंज्ञं च । अक्षै रक्षान्वा दीव्यति ।

**सहयुक्तेऽप्रधाने २।३।१९**

सहार्थेन युक्तेऽप्रधाने तृतीया । पुत्रेण सहागतः पिता । एवं साकं सार्धं–समं योगेऽपि । विनापि तद्योगं तृतीया । वृद्धो यूनेति निर्देशात् ।

---

१– अत्र निन्दा गम्यते न तु पूजा, तेन कर्मप्रवचनीयत्वाभावे उपसर्गत्वात् 'उपसर्गात् सुनोती' ति षत्वम् ।

२– संसारसंरक्षण विषये देवानतिक्रम्य वर्तते कृष्ण इत्यर्थः । देवानामपि पूज्य इति वार्थः ।

३– अन्तं विराममतिक्रान्तोऽत्यन्तः स चासौ संयोगश्चात्यन्तसंयोगः=निरन्तरसन्निकर्ष इत्यर्थः । केनेत्याकांक्षायां गुण क्रियाद्रव्यै रिति औचित्याद्, बोध्यम् ।

४– मासेऽविच्छिन्न मङ्गलवतीत्यर्थः । एवं मासमधीते इत्यादि ।

५– यद् व्यापारानन्तरं क्रिया निष्पत्ति स्तत्प्रकृष्टोपकारकम् ।

**येनाङ्ग विकारः २।३।२०**

येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया । अक्ष्णा काणः अक्षिसंबन्धि काणत्वविशिष्ट इत्यर्थः ।

**अपवर्गे तृतीया २।३।६**

अपवर्गः फल प्राप्तिः तस्यां द्योत्यायां कालाध्वनो रत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वा नुवाकोऽधीतः । अपवर्गे किम् ? मास मधीतो नायातः ।

**हेतौ २।३।२३**

तृतीया । दण्डेन घटः ।

**इत्थं भूतलक्षणे २।३।२१**

तृतीया । जटाभिस्तापसः। जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः ।

**संज्ञो ऽन्यतरस्यां कर्मणि २।३।३२**

सम्पूर्वस्य जानातेः कर्मणि तृतीया वा। पित्रा पितरं वा संजानीते ।

**कर्मणा यमभिप्रैति स सम्प्रदानम् १।४।३२**

दानस्य कर्मणायमभिप्रैति स संप्रदान संज्ञः ।

**चतुर्थी संप्रदाने २।३।१३**

अनुक्ते । विप्राय गां ददाति। (क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्) पत्ये शेते (१) ।

**परिक्रयणे संप्रदान मन्यतरस्याम् १।४।४४**

नियतकालं भृत्यास्वीकरणं=परिक्रयणं तस्मिन्साधकतमं कारकं संप्रदानं वा स्यात् । शतेन शताय वा परिक्रीतः । (तादर्थ्ये चतुर्थी वाच्या) मुक्तये हरिं भजति। (उत्पातेन ज्ञापिते च) वाताय कपिला विद्युत् ।

**नमः–स्वस्ति–स्वाहा–स्वधाऽलं–वषड्योगाच्च २।३।१६**

एभिर्योगे चतुर्थीस्यात् । हरयेनमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । (अलमिति पर्याप्त्यर्थ ग्रहणम्) तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि ।

---

१ शयन क्रियया पतिं सम्बध्दुमीप्सतीत्यर्थः । कर्मान्तिर व्यापृतः पतिर्मंदीयं शयनं दृष्ट्वा सोऽपि शयीतेत्यभिप्रायेण शयनं करोतीति भावः ।

**ध्रुव (१) मपायेऽपादानम् १।४।२४**

अपायो विश्लेषस्तस्मिन् साध्ये ध्रुवमवधि भूतमपादानम् ।

**अपादाने पञ्चमी २।३।।२८**

ग्रामादायाति । धावतोऽश्वात्पतति इत्यादि ।

**जनिकर्तुः प्रकृतिः १।४।३०**

जायमानस्य हेतुरपादानंस्यात् । ब्रह्मणः प्रजाः प्रजायन्ते । (**ल्यब्लोपे कर्मण्यधिकरणे च**) प्रासादात्प्रेक्षते । आसनात्प्रेक्षते । प्रासादमारूह्य, आसने उपविश्य प्रेक्षत इत्यर्थः ।

**विभाषा गुणेऽस्त्रियाम् २।३।२५**

गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्या ज्जाड्येन वा बद्धः । गुणे किम् ? धनेन (२) कुलम् । अस्त्रियां किम् ? बुद्धया मुक्तः । विभाषेति योगविभागादगुणे स्त्रियां च क्वचित् । धूमादग्निमान् । नास्ति घटोऽनुपलब्धे : ।

**पृथग्विना – नानाभिस्तृतीया न्यतरस्याम् २।३।३२**

एभिर्योगे तृतीयास्यात् पञ्चमी द्वितीये च । पृथग् ग्रामेण ग्रामाद् ग्रामं वा । एवं विना नाना ।

**अन्यारादितरर्ते – दिक् शब्दाञ्चूत्तरपदाजाहियुक्ते २।३।२९**

अन्य इत्यर्थ ग्रहणम् । इतरग्रहणं प्रपञ्चार्थम् । अन्यो भिन्न इतरो वा कृष्णात् । आरात् वनात् । ऋते कृष्णात् । पूर्वोग्रामात् । दिशि दृष्टः शब्दो दिक्शब्दः, तेन सम्प्रति देशकाल वृत्तिना योगेऽपि भवति । चैत्रात्पूर्वः फाल्गुनः । प्राक् प्रत्यग् वा ग्रामात् । आच्, दक्षिणा ग्रामात् । आहि, दक्षिणाहि ग्रामात् ।

**अप–परी वर्जने १।४।८८**

एतौ वर्जनार्थे कर्मप्रवचनीयसंज्ञौ स्तः ।

**आङ्मर्यादावचने १।४।८९**

आङ्मर्यादायामुक्तसंज्ञ । वचनग्रहणादभिविधावपि ।

**पञ्चम्यपाङ परिभिः २।३।१०**

एतैः कर्मप्रवचनीयैर्योगे पञ्चमी । अपहरेः परि हरेः संसारः । परिरत्र वर्जने = साहचर्यात् । लक्षणादौ तु हरिं परि । आमुक्तेः संसारः । आसकलाद् ब्रह्म ।

---

१ प्रकृतधात्वर्थानाश्रयत्वे सति तज्जन्य विभागाश्रयत्वं ध्रुवत्वम् ।

२ धनं न गुणः, किन्तु द्रव्यम् । तेन हेतौ तृतीयैव ।

### प्रतिः प्रतिनिधि–प्रतिदानयोः १।४।९२

अत्र कर्मप्रवचनीययोगे पञ्चमी । प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रतियच्छति माषान् ।

### षष्ठी शेषे २।३।५०

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः शेषस्तत्र षष्ठी । राज्ञः पुरुषः । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधोदकस्योपस्कुरुते (१) ।

भजे शम्भोश्चरणयोः । फलानां तृप्तः ।

### कर्तृकर्मणोः कृति २।३।६५

कृद्योगे कर्तरि कर्मणि च षष्ठी । कृष्णस्य कृतिः । जगतः कर्ता कृष्णः । (२) (गुणकर्मणिवेष्यते) नेताश्वस्य स्रुघ्नं स्रुघ्नस्य वा। कृति किम्? तद्धिते माभूत् । कृतपूर्वी कटम् ।

### उभयप्राप्तौ कर्मणि २।३।६६

उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी । आश्चर्यो गवां दोहोऽगोपेन ।

### कृत्यानां कर्तरि वा २।३।७१

षष्ठी । मया मम वा सेव्यो हरिः ।

### क्तस्य च वर्तमाने २।३।६७

वर्तमानार्थस्य क्तस्य योगे षष्ठी । न लोकेति वक्ष्यमाणनिषेधस्यापवादः । राज्ञा मतः बुद्धः पूजितो वा ।

### अधिकरणवाचिनश्च २।३।६८

क्तस्य योगे षष्ठी । इदमेषांशयितम् ।

### न लोकाव्यय–निष्ठा–खलर्थ–तृनाम्(३) २।३।६९

एषां योगे षष्ठी न । लादेशः– कुर्वन कुर्वाणः सृष्टिं हरिः । उः– हरिं दिदृक्षुः, अलङ्करिष्णु र्वा ।

---

१– एधाश्च दकानिचेतिद्वन्द्वात् षष्ठी कर्मत्वस्य शेषत्वविवक्षायाम् । एधोदकसंबन्ध्युपस्करणमिति बोधः ।

२– कृदन्तद्विकर्मकधातुयोगे गुणकर्मणि=अप्रधानकर्मणि षष्ठी विकल्प इष्यते इत्यर्थः । प्रधानकर्मणि तु नित्यैव षष्ठी ।

३– लश्च–उश्च–उकश्च–अव्ययञ्च–निष्ठा च खलर्थश्च तृञ्चेति तेषाम् । ल इति लडादीनां सामान्येन ग्रहणम् । तेषाञ्च साक्षात्प्रयोगा भावात्तदादेशाः शत्रादयः कृत्प्रत्यया गृह्यन्ते । 'कर्तृकर्मणो' रिति प्राप्तायाः षष्ठ्या निषेधोऽयम् ।

उकः– दैत्यान् घातुको हरिः । (कमेरनिषेधः (१)) लक्ष्म्याः कामुकः । अव्ययम्– जगत्सृष्ट्वा । निष्ठा– दैत्यान् हतवान् विष्णुः । विष्णुना हता दैत्याः । खलर्थः– ईषत्करः प्रपञ्चो हरिणा । तृन्निति प्रत्याहारः । शतृशानचाविति तृशब्दा दारभ्य तृनो नकारात् । शानन्– सोमं पवमानः । चानश्– आत्मानं मण्डयमानः । शतृ– वेदमधीयन् । तृन्– कर्ता लोकान् । (द्विषः शतुर्वा) मुरस्य मुरं वा द्विषन् । (सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः) शेषे षष्ठी तु स्यादेव । ब्राह्मणस्य कुर्वन् । नरकस्य जिष्णुः ।

## अकेनोर्भविष्यदाधमर्ण्ययोः २।३।७०

भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न । सतः पालकोऽवतरति । व्रजंगामी । शतं दायी । (निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्) किं निमित्तं वसति । केन निमित्तेन । कस्मै निमित्तायेत्यादि । एवं किं कारणं, को हेतुः, किं प्रयोजनमित्यादि । प्रायग्रहणा दसर्वनाम्नः प्रथमा द्वितीये न स्तः । ज्ञानेन निमित्तेन हरिः सेव्यः। ज्ञानाय निमित्तायेत्यादि ।

## षष्ठ्यतसर्थप्रत्ययेन २।३।३०

ग्रामस्य दक्षिणतः, पुरः, पुरस्तात्, उपरि उपरिष्टात् ।

## एनपा द्वितीया २।३।३१

एनपेति योगविभागात्षष्ठ्यपि । दक्षिणेन ग्रामं ग्रामस्य वा । एवमुत्तरेण ।

## दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् २।३।३४

एतैर्योगे षष्ठी पञ्चमी च । दूरं निकटं वा ग्रामस्यग्रामाद्वा ।

## दिवस्तदर्थस्य २।३।५८

द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी । शतस्य दीव्यति । तदर्थस्य किम् ? ब्राह्मणं दीव्यति । स्तौतीत्यर्थः ।

## विभाषोपसर्गे (२) २।३।५९

शतस्य शतं वा प्रतिदीव्यति ।

## आधारोऽधिकरणम् १।४।४५

कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात् ।

---

१– उकान्त–कमेर्योगे षष्ट्या निषेधो नास्तीत्यर्थः ।

२– उपसर्गे सति व्यवहृपणार्थस्य दिवः कर्मणि षष्ठी वा स्यादित्यर्थः ।

**सप्तम्यधिकरणे च २।३।३६**

चाद् दूरान्तिकार्थेभ्यः । औपश्लेषिको (१) वैषयिकोऽभिव्यापकश्चेत्याधार स्त्रिधा कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छास्ति । सर्वस्मिन् आत्मास्ति । वनस्य दूरेऽन्तिके वा । (क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्) अधीती व्याकरणे । (साध्वसाधुप्रयोगे च) साधुः कृष्णो मातरि । असाधुर्मातुले । (निमित्तात्कर्मयोगे)

**चर्मणि द्वीपिनं हन्ति दन्तयो र्हन्ति कुञ्जरम् ।**
**केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥**

**यस्य च भावेन भावलक्षणम् २।३।३७**

यस्य क्रियया क्रियान्तरं लक्ष्यते तत. सप्तमी । गोषु दुह्यमानासु गतः ।

**षष्ठी चानादरे २।३।३८**

अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः ।
रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ।

**स्वामीश्वराधिपति–दायाद–साक्षि–प्रतिभू–प्रसूतैश्च २।३।३९**

एभिर्योगे षष्ठीसप्तम्यौ स्तः । गवां गोषु वा स्वामी ।

**आयुक्त–कुशलाभ्यां चासेवायाम् २।३।४०**

आभ्यां योगे षष्ठीसप्तम्यौ स्तः । आयुक्तो=व्यापारितः । आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा । आसेवायां किम् ? आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः ।

**यतश्च निर्धारणम् २।३।४१**

जातिगुणक्रियासंज्ञाभिः समुदायादेक–देशस्य पृथक्करणं यतस्ततः षष्ठी सप्तम्यौ स्तः। नृणां नृषु वा ब्राह्मणः श्रेष्ठः। गवां गोषु वा कृष्णा गौर्बहुक्षीरा । गच्छतां गच्छत्सु वा धावन् शीघ्रः । छात्राणां छात्रेषु वा मैत्रः पटुः ।

**पञ्चमी विभक्ते २।३।४२**

विभागो=विभक्तम् । निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी । माथुराः पाटलिपुत्रेभ्य आढ्यतराः ।

---

१– उपश्लेषः=संयोगादि संबन्धः, तत्प्रयोज्य आधार औपश्लेषिकः । विषयता संबन्धकृत आधारो वैषयिकः । सकलावयवव्याप्तिकृत आधारोऽभिव्यापकः ।

### साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः २।३।४३

मातरि साधुनिपुणो वा । अर्चायां किम् ?निपुणो राज्ञो भृत्यः । इह तत्त्वकथने तात्पर्यम् । ( अप्रत्यादिभिरिति वक्तव्यम् ) साधुनिपुणो वा मातरं प्रति पर्यनु वा ।

### अधिरीश्वरे १।४।९७

स्वस्वामिसम्बन्धेऽधिः कर्मप्रवचनीयः ।

### यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी २।३।९

अत्र कर्मप्रवचनीययुक्ते सप्तमी । उपपरार्धे हरेर्गुणाः । परार्धादधिका इत्यर्थः। ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी । अधिभुवि रामः । अधिरामे भूः ।

## ।। इति विभक्त्यर्थाः (कारकाणि) ।।

अभ्यासः

(१) प्रातिपदिकार्थ-लिङ्ग-परिमाण–वचनमात्रे प्रथमा। प्रातिपदिकार्थश्च लिङ्गञ्च परिमाणञ्च वचनञ्चेति द्वन्द्वसमासे प्रातिपदिकार्थ लिङ्गपरिमाणवचनानि तान्येव प्रातिपदिकार्थ लिङ्ग परिमाणवचनमात्रं तस्मिन्। द्वन्द्वान्ते श्रूयणाणं पदं प्रत्येकमभिसम्बध्यते इति नियमात् मात्रशब्दस्य प्रत्येकममिसम्बन्धः, मात्रशब्दस्यावधारणमर्थः । तेन प्रातिपदिकार्थ मात्रे लिङ्ग मात्राधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा इति सूत्रार्थः ।

(२) "क्रमादमुं नारद इत्यबोधिसः" अत्र 'क्वचिन्निपातेनाभिधानमि' ति नियमात् निपातेन इति शब्देन कर्मणो नारदस्योक्तत्वात् उक्ते कर्मणि प्रथमेति नियमेन नारदशब्दात्प्रथमा-विभक्तिरिति ज्ञेयम् ।

(३) 'आदिरवाद्योर्न' ण्यन्तयोः अद् धातोः खाद् धातोश्चाणौ यः कर्ता तस्य णौ न कर्मत्वमित्यर्थः । उदाहरणं यथा–आदयति खादयति वाऽन्नं वटुना – अत्र अत्ति खादति वा अन्नं वटुस्तं प्रेरयतीति प्रत्यवसानार्थे गतिबुद्धीत्यादि सूत्रेण वटोः कर्मत्वे प्राप्ते 'भ्रादिखाद्योर्न' इति वार्तिकेन निषेधे कर्मत्वाभावात् प्रयोज्य कर्तुरनुक्तात्वात् तृतीया ।

(४) ब्राह्मणाः क्षत्रियेभ्यो बुद्धिमत्तराः – इत्यत्र पञ्चमी विभक्तेः, इति सूत्रेण विभागेऽर्थे क्षत्रियशब्दात्पञ्चमी विभक्तिरिति ज्ञेयम् । इत्यादि ।

अभ्यासार्थं प्रश्नाः

(१) प्रातिपदिकार्थ–लिङ्ग–परिमाण–वचनमात्रे प्रथमेति सूत्रस्यार्थः सुस्पष्टं प्रतिपाद्यताम् ।
(२) द्रोणो व्रीहिरित्यत्र प्रातिपपदिकार्थ मात्रे प्रथमायामापत्तिमुद्भाव्य समाधीयताम् ।

(३) 'क्रमादमुं नारद इत्यबोधिसः' अत्र बुध् धातोः कर्मणो नारदस्य प्रथमाविधाने युक्तिः प्रदर्श्यताम् ।

(४) गां दोग्धि पयः – अत्र मुख्य गौणं च कर्म प्रदर्श्य उभयत्र द्वितीया विधाने सूत्रोल्लेखः क्रियताम् ।

(५) शत्रूनगमयत्स्वर्गम् – इत्यत्र ससूत्रं द्वितीया विभक्तिः समर्थनीया ।

(६) 'आदिखाद्योर्न, इति वार्तिकस्य सोदाहरणमर्थो निरूप्यताम् ।

(७) हरिर्वैकुण्ठमध्यास्ते – अत्र वैकुण्ठमित्यत्र कथं द्वितीया विभक्ति रिति कथ्यताम् ।

(८) उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितियाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥
अस्यार्थं विलिख्योदाहरणं च दीयताम् ।

(९) 'कालाध्वनोरत्यन्तसंयोगे' इति सूत्रस्यार्थमुदाहरणं च लिखत ।

(१०) रामेण बाणेन हतो बाली– अत्र कथं तृतीया ?

(११) सहयुक्तेऽप्रधाने – अस्योदाहरणं दीयताम् ।

(१२) दण्डेनघटः – अत्र तृतीया विभक्तिः समर्थनीया ।

(१३) हरये नमः – इत्यत्र कथं चतुर्थीति लिख्यताम् ।

(१४) अपहरेः संसारः – इत्यत्र केन पञ्चमीति कथ्यताम् ।

(१५) कृष्णस्य कृतिरित्यत्र कथं षष्ठीति भण्यताम् ।

(१६) दैत्यान्घातुको हरिरित्यत्र षष्ठी निषेधे सूत्रं प्रदर्श्यताम् ।

(१७) आधारः कतिविधः ? किञ्च तस्योदाहरणमिति प्रतिपाद्यताम् ।

(१८) चर्मणिद्वीपिनं हन्ति – अत्र चर्मणीति सप्तमी समर्थनीया ।

(१९) रुदति रुदतो वा प्राव्राजीत्– इत्यत्र षष्ठी सप्तम्यौ समर्थनीये ।

(२०) यतश्च निर्धारणम् – इत्यस्योदाहरणद्वयं देयम ।

(२१) ब्राह्मणाः क्षत्रियेभ्यो बुद्धिमत्तराः – कथं पञ्चमीति प्रतिपाद्यताम् ।

# अथ समासप्रकरणम्

समासः पञ्चधा । तत्र समसनं(१) समासः । स च विशेषसंज्ञाविनिर्मुक्तः केवलसमासः प्रथमः । प्रायेण पूर्वपदार्थप्रधानोऽव्ययी भावो द्वितीयः । प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुष स्तृतीयः । तत्पुरुषभेदः कर्मधारयः । कर्म धारयभेदो द्विगुः । प्रायेणान्यपदार्थ प्रधानो बहुव्रीहिश्चतुर्थः । प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः ।

**समर्थः पदविधिः(२) २।१।१**

पदसंबन्धी यो विधिः स समर्थाश्रितो बोध्यः ।

**प्राक् कडारात् समासः २।१।३**

कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते ।

**सह सुपा २।१।४**

सुप् सुपा सह वा समस्यते । समासत्वात्प्रातिपदिकत्वे सुपो लुक् । परार्थाभिधानं वृत्तिः । कृत्तद्धितसमासैकशेषसनाद्यन्त धातुरूपाः पञ्च वृत्तयः । वृत्यर्थावबोधकं वाक्यं विग्रहः । स च लौकिको (३) ऽलौकिकश्च द्विधा । तत्र पूर्वं भूत इति लौकिकः । पूर्व अम् भूत सु इत्यलौकिकः । भूतपूर्वः । भूतपूर्वे चरडिति निर्देशात्पूर्वं निपातः ।

(**इवेन समासो विभक्त्यलोपश्च**) वागर्थौ इव वागर्थाविव ।

## इति केवल समासः

अभ्यासः

**प्रश्न १. समासशब्दस्य कोऽर्थः ?**

उ० – अनेकेषां पदानामेकपदीभवनं समास इत्युच्यते ।

---

(१) अनेकपदानामेकीभवनमित्यर्थः ।

(२) सामर्थ्यं द्विविधम्, व्यपेक्षारूपं, एकार्थीभावरूपं च । तत्र आकाङ्क्षादिवशात् पदानां परस्परसम्बन्धो व्यपेक्षा, तद्रूपं सामर्थ्यं वाक्य एव भवति यथा 'राज्ञः पुरुषः' इत्यादौ । अपृथगुपस्थितिविषयत्वमेकार्थी भावत्वम् = (एकार्थी भावरूपं सामर्थ्यम्) तच्च समासादिवृत्तावेव भवतीति बोध्यम् ।

(३) प्रयोगयोग्यो लौकिकस्तद्भिन्नोऽलौकिकः ।

प्रश्न २. का नाम वृत्तिः ? तासां नामानि पृथक्-पृथग् विलिखत ।

उ० – (क) परार्थाभिधानं वृत्तिः ।

(ख) कृत्तद्धितसमासैकशेषसनाद्यन्त धातुरूपाः पञ्च वृत्तयः सन्ति ।

प्रश्न ३. 'भूतपूर्वः' इत्यस्य साधनप्रक्रियां सम्यक् प्रतिपादयत

उ० – पूर्वं भूत इति लौकिकविग्रहे पूर्व+अम्+भूत सु इत्यलौकिकविग्रहे 'सह सुपा' इति समासे समासत्वात् 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' इति सुपो लुकि पूर्व+भूत इति स्थिते 'प्रथमा निर्दिष्टं समास उपसर्जनम्' इति द्वयोरपि उपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति उभयोरपि पूर्वभूतशब्दयोः पूर्वनिपाते प्राप्ते 'भूतपूर्वे चरट्' इति निर्देशात् भूतशब्दस्यैव पूर्वनिपाते एकदेशविकृतन्यायेन प्रातिपदिकात्सौ रुत्वे विसर्गे च 'भूतपूर्वः' इति सिद्धयति ।

## अभ्यासार्थं प्रश्नाः

(१) समासः कतिविधः ? तेषां नामानि कानि ?

(२) कस्मिन् समासे अन्यपदार्थः प्रधानो भवति ?

(२) को नाम विग्रहः ? लौकिकालौकिकविग्रहयोः सोदाहरणं लक्षणं ब्रूत ।

(४) सूत्रार्थान् विलिखत–

(क) समर्थः पदविधिः

(ख) पाक्कडारात् समासः

(ग) सह सुपा

(५) 'वागर्थाविव' इत्यस्य सिद्धिपथं सम्यक् निर्दिशत ।

(६) 'भूतपूर्वः' इत्यत्र कथं पूर्वशब्दस्य पूर्वप्रयोगो न जातः ?

# अथाव्ययीभावसमासः ।

**अव्ययीभावः २।१।५**

अधिकारोऽयं प्राक्तत्पुरुषात् ।

**अव्ययं विभक्ति–समीप–समृद्धि–व्यृद्धयर्थाभावत्यया संप्रति–शब्दप्रादुर्भाव –पश्चा-द्यथानुपूर्व्य–यौगपद्य–सादृश्य–संपत्ति–साकल्यान्तवचनेषु २।१।६**

विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन नित्यं समस्यते । प्रायेणा विग्रहो नित्यसमासः, प्रायेणास्वपदविग्रहो वा । विभक्तौ–हरि ङि अधि इति स्थिते ।

**प्रथमानिर्दिष्टं समास उपसर्जनम् १।२।४३**

समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनं स्यात्

**उपसर्जनं पूर्वम् २।२।३०**

समासे उपसर्जनं प्राक् प्रयोज्यम् । इत्यधेः प्राक् प्रयोगः । सुपो लुक् । एकदेशविकृतस्या-नन्यत्वात् प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । अव्ययीभावश्चेत्यव्ययत्वात्सुपो लुक् । अधिहरि(१) ।

**अव्ययीभावश्च २।४।१८**

नपुंसकं स्यात् । गाः पातीति गोपाः तस्मिन्नित्यधिगोपम् (२) ।

**नाव्ययीभावादतोम्त्वपञ्चम्याः २।४।८३**

अदन्तादव्ययीभावात्सुपो न लुक्, तस्य पञ्चमीं विना अमादेशः । कृष्णस्य समीपम् उपकृष्णम् ।

**तृतीयासप्तम्यो र्बहुलम् २।४।८४**

अदन्तादव्ययीभावात् तृतीयासप्तम्यो र्बहुलमम्भावः । उपकृष्णेन उपकृष्णम् । बहुलग्रहणात्, समुद्रमुन्मत्तगङ्गमित्यादौ नित्यमम्भावः । मद्राणां समृद्धिः=संमद्रम् । यवनानां व्यृद्धि-र्दुर्यवनम्(३) । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । निद्रा सम्प्रति न

---

१– अत्राधिशब्दः सप्तम्यर्थस्य द्योतकः । हरौ इत्यधिहरि । विभक्ता वुदाहरणमिदम् ।

२– विभक्त्यर्थेऽव्ययीभावसमासे सुब्लुकि नपुंसकत्वे ह्रस्वत्वे च सति 'नाव्ययीभावाद्' इत्यमि पूर्वरूपम् ।

३– विगता ऋद्धिः=व्यृद्धिः 'दुर्' शब्दार्थकोऽत्रव्यृद्धि शब्दः ।

युज्यतेऽतिनिद्रम्। हरिशब्दस्य प्रकाशः इतिहरि। विष्णोः पश्चादनुविष्णु। योग्यता–वीप्सा–पदार्थानतिवृत्ति–सादृश्यानि यथार्थाः (१)। रूपस्य योग्यमनुरूपम्। अर्थमर्थं प्रति प्रत्यर्थम्। शक्तिमनतिक्रम्य यथाशक्ति।

## अव्ययीभावे चाकाले ६।३।८१

सहस्य सः स्यादव्ययीभावे न तु काले। हरेः सादृश्यं सहरि। काले तु सहपूर्वाह्णम्। ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम्। चक्रेण युगपत् सचक्रम्। सदृशः सख्या ससखि। क्षत्राणां सम्पत्तिः सक्षत्रम्। तृणमपरित्यज्य सतृणम् अत्ति, साकल्येनेत्यर्थः। अग्निग्रन्थपर्यन्तमधीते साग्नि।

## यथाऽसादृश्ये २।१।७

असादृश्य एव यथाशब्दः समस्यते। नेह–यथा हरिस्तथा हरः।

## यावदवधारणे(२) २।१।८

यावन्तः श्लोका स्तावन्तोऽच्युतप्रणामा इति–यावच्छलोकम्।

## सुप्प्रतिना मात्रार्थे(३) २।१।९

शाकस्य लेशः शाकप्रति।

## विभाषा २।१।११

अधिकारोऽयम्।

## अपपरि बहिरञ्चवः पञ्चम्या २।१।१२

अपविष्णु संसारः। अप विष्णोः। परि विष्णु। परि विष्णोः। बहिर्वनम्। बहिर्वनात्। प्राग्वनम्। प्राग्वनात्।

## तिष्ठद्गुप्रभृतीनि च २।१।१७

एतानि निपात्यन्ते। तिष्ठन्ति गावो यस्मिन्काले स तिष्ठद्गुर्दोहनकालः।

## पारे मध्ये षष्ठ्या वा २।१।१८

पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते। एदन्तत्वं चानयोर्निपात्यते। पारेगङ्गम्। गङ्गापारम्। मध्येगङ्गम्। गङ्गामध्यम्। महाविकल्पेन वाक्यमपि।

---

१– यथा शब्दस्यार्थाः इत्यर्थः

२– इयत्ता परिच्छेदे गम्ये 'यावद' इत्यव्ययं समस्यते सोऽव्ययी भाव इति सूत्रार्थः।

३– सुबिति च्छेदः। मात्रा=लेशः। तस्मिन्नर्थे विद्यमानेन सुबन्तं समस्यते इत्यर्थः।

## संख्या वंश्येन २।१।१९

वंशो द्विधा विद्यया जन्मना च । तत्र भवो वंश्यः, तद्वाचिना सह संख्या समस्यते । द्वौ मुनी वंश्यौ द्विमुनि । व्याकरणस्य त्रिमुनि । विद्यातद्वतामभेद विवक्षायां तु त्रिमुनि व्याकरणम् । एकविंशति भारद्वाजम्(१) ।

## नदीभिश्च २।१।२०

नदीभिः संख्या वा समस्यते । (समाहारे चायमिष्यते) पञ्च गङ्गम्(२) । द्वियमुनम् ।

## अन्यपदार्थे च संज्ञायाम् २।१।२१

अन्यपदार्थे सुबन्तं नदीभिः सह नित्यं समस्यते संज्ञायाम् । विभाषा धिकारेपि वाक्येन संज्ञानवगमादिह नित्यसमासः । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् ।

## तद्धिताः ४।१।७६

आपञ्चमसमाप्तेरधिकारोऽयम् ।

## अव्ययीभावे शरत्प्रभृतिभ्यः ५।४।१०७

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे । शरदः समीपमुपशरदम् । प्रतिविपाशम् । शरद् । विपाश् । असस् । मनस् । उपानह् । दिव् । हिमवत् । अनडुह् । दिश् । दृश् । विश् । चेतस् । चतुर् । त्यद् । तद् । यत् । कियत् । 'जराया जरस् च' (ग सू.) उपजरसम् ।

## अनश्च ५।४।१०८

अन्नन्तादव्ययीभावाट्टच् ।

## नस्तद्धिते ६।४।१४४

नान्तस्य भस्य टेर्लोप स्तद्धिते । उपराजम् । अध्यात्मम् ।

## नपुंसकादन्यतरस्याम् ५।४।१०९

अन्नन्तं यत् क्लीबं तदन्तादव्ययी भावाट्टच् वा स्यात् । उपचर्मम् । उपचर्म ।

---

१– जन्मना वंशमुदाहरति– एकविंशतीति । एकविंशतिर्भारद्वाजा इति कर्मधारयं बाधित्वाऽव्ययीभावः ।

२– पञ्चानां गङ्गानां समाहार इति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इति द्विगुसमासं बाधित्वाऽ व्ययीभा समासः ।

**झय: ५।४।१११**

झयन्तादव्ययीभावाट्टच् वा स्यात् । उपसमित् । उपसमिधम् ।

**नदीपौर्णमास्याग्रहायणी भ्यः ५।४।११०**

वा टच् स्यात् । उपनदम् । यस्येति चेति इलोपः। उपनदीत्यादिः ।

**गिरेश्च सेनकस्य ५।४।११२**

टच् वा स्यात् । उपगिरम् । उपगिरि । ( **प्रतिपरसमनुभ्योऽक्ष्णः** ) टच् स्यात् । अक्ष्णोऽभिमुखं प्रत्यक्षम् । अक्ष्णः परं परोक्षम् । अतएव समासः । परोक्षे लिडिति निपातनात्परस्यौकार इत्यादि। इत्यव्ययी भावः।

## अभ्यासः

प्र० (१) कीदृशः समासोऽव्ययीभावसमास इति कथ्यते ?

उत्तरम् – प्रयेण पूर्वपदार्थप्रधानः समासः, अव्ययीभावसमास इति कथ्यते ।

प्र० (२) 'अधिहरि' इति सम्यक् साधयत

उत्तरम् – हरौ इति लौकिकविग्रहे, हरि ङि अधि इति अलौकिकविग्रहे 'अव्ययं विभक्ति · · ·' इति समासे 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति अधि इत्यस्य उपसर्जनसंज्ञायां 'उपसर्जनं पूर्वम्' इति अधीत्यस्य पूर्वनिपाते अधिहरि+ङि इति जाते समासत्वात् प्रातिपदिकत्वे ङे र्लुकि एकदेशविकृतन्यायेन प्रातिपदिकत्वात् समुदायात्सौ 'अव्ययीभावश्च' इति अव्ययत्वात् 'अव्ययादाप्सुपः' इति सोर्लुकि अधिहरि इति सिद्धयति ।

प्र० (३) निर्मक्षिकम् इत्यस्य सिद्धिपथं निर्दिशत ।

उत्तरम् – मक्षिकाणामभावः, इति लौकिक विग्रहे निर मक्षिका आम् इति अलौकिक विग्रहे 'अव्ययम्– – –' इति समासे समासत्वात्प्रातिपदिकत्वेन सुपो लुकि निर इत्यस्य उपसर्जनत्वेन पूर्वप्रयोगे नपुंसकत्वे ह्रस्वे च 'नाव्ययी भावादतोऽम्त्वपञ्चम्याः" इति अमि निर्मक्षिकमिति जायते ।

## अभ्यासार्थं प्रश्नाः

(१) अधिगोपम्, उपकृष्णम्, सहरि, शाकप्रति, पारेगङ्गम्, द्विमुनि, उपशरदम्, अध्यात्मम्, प्रत्यभम् एतेषां प्रयोगाणां साधुत्वप्रकारः सम्यक् दर्शनीयः।

(२) यावच्छ्लोकम्, वहिर्वनम्, पञ्चगङ्गम्, उपसमिधम्, परोक्षम्, एषु प्रयोगेषु विशेष कार्यविधायकानि सूत्राणि तेषां कार्याणि च निर्दिशत ।

(३) अधोऽङ्किताना सूत्राणां सोदाहरणमर्थान् लिखत ।

(क) अव्ययीभावे चाकाले (ख) यथाऽसादृश्ये (ग) पारे मध्ये षष्ठ्या वा

(घ) संख्या वंश्येन (ङ) गिरेश्च सेनकस्य

(४) विग्रहवाक्यानि विलिखत–

(क) अतिहिमम् (ख) यथाशक्ति (ग) सचक्रम्

(घ) शाकप्रति (ङ) द्वियमुनम् (च) उपगिरि

(५) विग्रहानुसारं रूपाणि विलिखत–

(क) मद्राणां समृद्धिः (ख) यवनानां व्यृद्धिः

(ग) क्षेत्राणां संपत्तिः (घ) तृणमपरित्यज्य

(ङ) शरदः समीपम् (च) अक्ष्णः परम्

(६) अधिहरि, अतिनिद्रम्, अनुज्यंष्टम्, गङ्गापारम् अध्यात्मम्, उपगिरम्, एतान् शब्दान् प्रयुज्य पृथक् पृथक्, वाक्यानि निर्मात ।

(७) समस्तपदगतामशुद्धि परिहरत–

(क) उपकृष्णस्य स्वारस्यं गोप्यो जानन्ति नेतरे ।

(ख) सर्वे मनुष्या यथाशक्ति धनान्यर्जयितुमिच्छन्ति ।

(ग) लक्ष्मीपतौ अधिहरौ मम भक्तिरस्तु ।

(घ) तौ दम्पती उपनद्यां विहरतः ।

(ङ) इतिहरिः सर्वेषां पापान्धकारं हन्ति ।

# अथ तत्पुरुषसमासः

**तत्पुरुषः २।१।२२**

अधिकारोऽयं प्राग्बहुव्रीहेः ।

**द्विगुश्च २।१।२३**

तत्पुरुषसंज्ञः ।

**द्वितीया–श्रितातीत–पतित–गतात्यस्त–प्राप्तापन्नैः २।१।२४**

द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते । कृष्णं श्रितः, कृष्णश्रितः । इत्यादि ।

**तृतीया तत्कृतार्थेन गुणवचनेन २।१।३०**

तृतीयान्तं तृतीयान्तार्थकृत गुणवचनेनार्थेन च सह प्राग्वत् । शङ्कुलया खण्डः शङ्कुलाखण्डः । धान्येनार्थो धान्यार्थः । तत्कृतेति किम् ? अक्ष्णा काणः ।

**पूर्व–सदृश–समोनार्थ–कलह–निपुण–मिश्र–श्लक्ष्णैः २।१।३१**

तृतीयतान्मेतैः प्राग्वत् । मासपूर्वः । मातृसदृशः । पितृसमः । ऊनार्थे माषोनं कार्षापणम् । मासविकलम् । वाक्कलहः । आचारनिपुणः । गुडमिश्रः । आचारश्लक्ष्णः । (अवरस्योपसंख्यानम्) मासावरः ।

**अन्नेन व्यञ्जनम् २।१।३४**

संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन सह प्राग्वत् । दध्ना उपसिक्तमोदनं दध्योदनम् ।

**भक्ष्येण मिश्रीकरणम् २।१।३५**

गुडेन मिश्रा धाना गुडधानाः ।

**कर्तृकरणे कृता बहुलम् २।१।३२**

कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरिणा त्रातो हरित्रातः । नख भिन्नः ।

**⊕ कृद्ग्रहणे गति–कारकपूर्वस्यापि ग्रहणम् ⊕** नखनिर्भिन्नः ।

**चतुर्थी तदर्थार्थ–बलि–हित–सुख–रक्षितैः २।१।३६**

चतुर्थ्यन्तार्थाय यत् तद्वाचिनार्थादिभिश्च चतुर्थ्यन्तं प्राग्वत् । यूपाय दारु यूपदारु । तदर्थेन प्रकृतिविकारभाव एवेष्टः । तेनेह न– रन्धनाय स्थाली । अश्वघासादयस्तु षष्ठीतत्पुरुषाः ।

(अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्) द्विजायायं द्विजार्थः सूपः। द्विजार्थ यवागूः । द्विजार्थं पयः । भूतबलिः । गोहितम् । गोरक्षितम् ।

## पञ्चमी भयेन(१) २।१।३७

चोराद्भयं चोरभयम्

## स्तोकान्तिक–दूरार्थ–कृच्छ्राणि क्तेन(२) २।१।३९

## पञ्चम्याः स्तोकादिभ्यः ६।३।२

अलुगुत्तरपदे । स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः । अभ्यासादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रादागतः ।

## षष्ठी २।२।८

सुबन्तेन प्राग्वत् । राज्ञः पुरुषः । राजपुरुषः ।

## याजकादिभिश्च २।२।९

षष्ठ्यन्तं समस्यते । वक्ष्यमाणस्यापवादः (३)। ब्राह्मणयाजकः । देवपूजकः। (याजक, पूजक, परिचारक, परिवेषक, स्नातक, अध्यापक, उत्सादक, उद्वर्तक, होतृ, पोतृ, भर्तृ, रथगणक, पत्तिगणक, इति याजकादिः)। (गुणात्तरेण तरलोपश्च) तरबन्तं यद्गुणवाचि तेन समासः। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां महत्तरः सर्वमहान् ।

## न निर्धारणे २।२।१०

षष्ठी न समस्यते । नृणां द्विजः श्रेष्ठः ।

## पूरण–गुण–सुहितार्थ–सदव्यय–तव्य–समानाधिकरणेन २।२।११

पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते । पूरणे सतां षष्ठः । गुणे–काकस्य कार्ष्ण्यम् । सुहितार्थास्तृप्त्यर्थाः फलानां सुहितः । सत्–द्विजस्य कुर्वन् कुर्वाणो वा । अव्ययम्–ब्राह्मणस्य कृत्वा । पूर्वोत्तर साहचर्यात् कृदव्ययमेव गृह्यते । तेन तदुपरीत्यादि सिद्धम् । तव्यः– ब्राह्मणस्य कर्तव्यम् ।

समानाधिकरणे–तक्षकस्य सर्पस्य ।

---

(१) पञ्चम्यन्तं भयशब्देन सुबन्तेन समस्यते इत्यर्थः ।

(२) स्तोक, अन्तिक, दूर–एतदर्थकानि, कृच्छ्र एतानि पञ्चम्यन्तानि क्तप्रत्ययान्तेन समस्यन्ते इत्यर्थः । अर्थग्रहणं स्तोकान्तिकदूरेषु सम्बध्यते ।

(३) "तृजकाभ्यां कर्तरि" इत्यस्य ।

**क्तेन च पूजायाम् २।२।१२**

मतिबुद्धिसूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते । राज्ञां मतो बुद्धः पूजितो वा।

**अधिकरणवाचिना च २।२।१३**

क्तेन षष्ठी न समस्यते । इदमेषामासितं गतं भुक्तं वा ।

**कर्मणि च २।२।१४**

उभयप्राप्तौ कर्मणीति याषष्ठी सान समस्यते । आश्चर्यो गवां दोहोऽगोपेन ।

**तृजकाभ्यां कर्तरि २।२।१५**

कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः । अपां स्रष्टा । वज्रस्य भर्ता । ओदनस्य पाचकः ।

**कर्तरि च २।२।१६**

कर्तरि षष्ठ्या अकेन न समासः । भवतः शायिका ।

**पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २।२।१**

अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी । षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः । अपरकायः। एकदेशिना किम् ? पूर्वंनाभेः कायस्य । एकाधिकरणे किम्? पूर्वश्छात्राणाम् ।

**अर्धं नपुंसकम् २।२।२**

समांसवाच्यर्धशब्दो नित्यं क्लीबे स प्राग्वत् । अर्धं पिप्पल्या अर्धपिप्पली (१)। (एकविभक्ता वषष्ठयन्तवचनम्) इत्युपसर्जनसंज्ञाबाधा ध्द्रस्वो न । क्लीबे कीम् ?–ग्रामार्धः । द्रव्यैक्य एव । अर्धं पीप्लीनाम् ।

**द्वितीय–तृतीय–चतुर्थ–तुर्याण्यन्यतरस्याम् २।२।३**

एतान्येकदेशिना सह प्राग्वद्वा । द्वितीयं भिक्षायाः– द्वितीय भिक्षा । एकदेशिना किम ? द्वितीयं भिक्षायाः भिक्षुकस्य। अन्यतरस्यां ग्रहणसामर्थ्यात्पूरणगुणेति निषेधं बाधित्वा पक्ष षष्ठीसमासः । भिक्षाद्वितीयम् ।

---

(१) ननु अर्धं पिप्पल्याः अर्धपिप्पली, अर्धेन पिप्पल्याः अर्धपिप्पल्या । अर्धाय पिप्पल्याः अर्धपिप्पल्यै । इत्यादि विग्रहेषु पिप्पलीशब्दस्य नियतविभक्तितया 'एक विभक्ति चापूर्व निपाते' इति ।

## प्राप्तापन्ने च द्वितीयया (१) २।२।४

पक्षे द्वितीया श्रितेति समासः। प्राप्तो जीवनं-प्राप्तजीवनः। जीवनप्राप्तः। आपन्न जीवनः। जीवनापन्नः। इह सूत्रे द्वितीयया अ इति छित्वा अकारोऽपि विधीयते। तेन जीविकां प्राप्ता स्त्री प्राप्तजीविका। आपन्नजीविका।

## कालाः परिमाणिना २।२।५

परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते। मासो जातस्य यस्य स मासजातः।

## सप्तमी शौण्डैः २।१।४०

सप्तम्यन्तं शौण्डादिभिः प्राग्वत्। अक्षेषु शौण्डः अक्षशौण्डः। शौण्ड, धूर्त, कितव,, व्याड प्रवीण, संवीत, अन्तर, अधिप, पटु, पण्डित, कुशल, चपल, निपुण, इति शौण्डादिः। द्वितीया तृतीयेत्यादि योगविभागादन्यत्रापि द्वितीयादीनां प्रयोगवशात्समासो ज्ञेयः।

## दिक्संख्ये संज्ञायाम् २।१।५०

विशेषणं विशेष्येण बहुलमित्येव सिध्दे संज्ञायामेवेति नियमार्थं सूत्रम्। पूर्वेषुकामशमी सप्तर्षयः। तेनेह न (१) उत्तरावृक्षाः पञ्च ब्राह्मणाः।

## तध्दितार्थोत्तरपदसमाहारेच २।१।५१

तध्दितार्थे विषये उत्तरपदे च परतः समाहारेच वाच्ये दिक्संख्ये प्राग्वत्। पूर्वस्यां शालायां भवः पूर्वशाला इति समासे जाते। सर्वनाम्नो वृत्तिमात्रे पूर्वं पुंवत् —

## दिक्पूर्वपदादसंज्ञायां ञः ४।२।१०७

अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम्।

## तद्धितार्थे ष्वचामादेः ७।२।११७

ञिति णिति च तद्धिते अचामादेरचो वृद्धिः स्यात्। 'यस्येति च' पौर्व शालः (२)। पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौकृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः। तेन शाला-

---

उपसर्जनत्वात् 'गोस्त्रियोरिति' ह्रस्वः स्यादित्यत आह–एकविभक्ताविति, 'एक विभक्ति चापूर्वनिपाते' इति सूत्रे 'अषष्ठयन्तम्' इति वक्तव्यमित्यर्थः। पीप्पली शब्दस्य च षष्ठयन्तत्वान्नोपसर्जनत्वमिति न ह्रस्वः। १–प्राप्त–आपन्न, एतौ शब्दौ। द्वितायान्तेन समस्येते इत्यर्थः। (तयोरकारोऽन्तादेशश्च)।

१– सत्वेऽपि दिक्संख्ययोः संज्ञाया अभावादिति भावः।

२ - तद्धितार्थे दिक्समासोदाहरणमिदम्।

शब्दे आकार उदात्तः । पूर्वशालाप्रियः (१)। दिक्षु समाहारो नास्त्यनभिधानात्। (२) संख्यायास्तद्धितार्थे–षण्णां मातॄणामपत्यं षाण्मातुरः। 'मातुरुत्संख्यासंभद्रपूर्वायाः' इति वक्ष्यमाणोऽण्। (प्रकृते रुकारादेश आदिवृद्धिश्च) पञ्च गावोधनं यस्येति त्रिपदे बहुव्रीहौ अवान्तर तत्पुरुषस्य(१) विकल्पे(२) प्राप्ते (द्वन्द्वतपुरुषयोरुत्तरपदे नित्यसमासवचनम्)।

## गोरतद्धितलुकि ५।४।९२

गोन्तात्तत्पुरुषात् टच् स्यात्समासान्तो न तद्धितलुकि। पञ्चगवधनः(३)।

## संख्यापूर्वो द्विगुः २।१।५२

तद्धितार्थेत्यत्रोक्तः(४) संख्यापूर्वो द्विगुः।

## द्विगुरेकवचनम् २।४।१

द्विग्वर्थः समाहार एकवत्स्यात्।

## स नपुंसकम् २।४।१७

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। पञ्चानां गवां समाहारः पञ्चगवम्।

## विशेषणं विशेष्येण बहुलम् २।१।५७

भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत्। नीलमुत्पलं– नीलोत्पलम्। बहुलग्रहणात्क्वचिन्नित्यम्। कृष्णसर्पः। क्वचिन्न। रामो जामदग्न्यः। (अपरस्यार्धेपश्च भावो वक्तव्यः) अपरश्चासावर्धश्च पश्चार्धः।

## सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः २।१।६१

समानाधिकरणैः सह समस्यन्ते। सद्वैद्यः।

---

(१) उत्तरपदे परतो दिक्समासोदाहरणमिदम्।

(२) समाहारे दिक्पूर्वपदसमासो नास्तीति भावः।

(३) उत्तरपदे परतो विहितस्येत्यर्थः।

(४) महाविभाषाधिकादिति शेषः।

(५) (संख्यायाः): उत्तरपदे परत उदाहरणमिदम्। त्रिपदबहुव्रीहौ कृते सति धनशब्दे उत्तरपदे परे पूर्वयोस्तत्पुरुषे टचि, अवादेश इति भावः। अत्र द्वन्द्वतत्पुरुषयोरितिवार्तिके द्वन्द्वस्योदाहरणं तु वाक् च त्वक् च प्रिया यस्य सः 'वाक्त्वचप्रियः' इत्यादिबोध्यम्।

(६) त्रिविधः। अर्थात्– तद्धितार्थे विषये, उत्तरपदे च परतः समाहारे च वाच्ये, इत्येवं त्रिप्रकारो यः संख्यापूर्वः समास उक्तः स द्विगुरिति।

आन्महतः (१) समानाधिकरणजातीययोः ६।३।४६

महावैयाकरणः ।

तत्पुरुषः समानाधिकणः (२) कर्मधारयः १।२।४२

पुंवत्कर्मधारयजातीयदेशीयेषु ६।३।४२

कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कात्पर ऊङ्भावो यस्मिन् तथाभूतं पूर्वं पुंवत्। पूरण्यां प्रियादिष्वप्राप्तः पुंवद्भावो विधीयते। महानवमी। कृष्णचतुर्दशी। महाप्रिया। पूज्यमानैः किम् ? उत्कृष्टो गौः। पङ्कादुद्धृत इत्यर्थः।

उपमानानि (३) सामान्यवचनैः २।१।५५

घनश्यामः ।

उपमितं व्याघ्रादिभिः (४) सामान्याप्रयोगे २।१।५६

पुरुषो व्याघ्र इव पुरुषव्याघ्रः। सामान्याप्रयोगे किम् ? पुरुषो व्याघ्रइवशूरः। (शाकपार्थिवादीनामुत्तरपदलोपश्च) शाकप्रियः पार्थिवः शाकपार्थिवः। देवब्राह्मणः।

कडाराः कर्मधारये २।२।३८।

कडारादयः शब्दाः कर्मधारये वा पूर्वप्रयोज्याः। कडारजैमिनिः। जैमिनिकडारः।

मयूरव्यंसकादयश्च २।१।७२

एते निपात्यन्ते। मयूरोव्यंसको मयूरव्यंसकः। व्यंसको धूर्तः। उदक च अवाक् च उच्चावचम् (५)। निश्चितंच प्रचितंच निश्चप्रचम् (६)। नास्ति किञ्चन यस्य सोऽकिञ्चनः (७) (आख्यात माख्यातेन (८) क्रियासातत्ये) अश्नीत पिबते त्येवं सततं यत्राभिधीयते सा अश्नीतपिबता।

---

१– महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे इत्यर्थः।

२– समानाधिकरणानेकपदावयवकस्तत्पुरुषः कर्मधारयसंज्ञको भवतीत्यर्थः।

३– उपमानवाचकानि समानधर्मवाचकैः समस्यन्त इत्यर्थः।

१– उपमेयं व्याघ्रादिभिः प्राग्वत्साधारण धर्मस्याप्रयोगे सतीत्यर्थः।

२– उदक्शब्दस्य 'उच्च' इत्यादेशः। अवाक्शब्दस्य 'अवच, आदेशश्च। "उच्चावचंनैकभेद" मित्यमरः।

३– निश्चितशब्दस्य निश्चादेशः। प्रचित शब्दस्य प्रचादेशः।

४– 'चन' इत्यव्यय मप्यर्थे। नास्ति किमपि यस्येत्यर्थे बहुव्रीह्यपवादस्त्रिपदस्तत्पुरुषः। नञो नकारस्य लोपश्च निपात्यते।

५– आख्यातं= तिङन्तम्। क्रियासातत्ये गम्ये तिङन्तं तिङन्तेन समस्यते स तत्पुरुष इत्यर्थः।

पचतभृज्जता । खादतमोदता । नास्तिकुतो भयं यस्य सः– अकुतोभयः । अन्यो राजा राजान्तरम् । चिदेव चिन्मात्रम् ।

**नञ् २।२।६**

सुपा प्राग्वत् ।

**नलोपोनञः (१) ३।३।७३**

नञोनस्यलोप उत्तरपदे । अब्राह्मणः ।

**तस्मान्नुडचि ६।३।७४**

लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुट् । अनश्वः (२) । नैकधेत्यादौतु नशब्देन सह सुप्सुपेति समासः ।

**कुगतिप्रादयः २।२।१८**

एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरूषः ।

**ऊर्यादि च्विडाचश्च १।४।६१**

ऊर्यादयश्चव्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य (३) । शुक्लीकृत्य (४) । पटपटाकृत्य (५)। **(कारिका शब्दस्योपसंख्यानम्)** कारिका= क्रिया, कारिकाकृत्य ।

**अनुकरणंचानितिपरम् १।४।६२**

खाट्कृत्य । अनितिपरम् किम् ? खाडितिकृत्वा निरष्ठीवत् ।

---

१– 'न' इति लुप्तषष्ठीकं पदम् तदाह–नञो नस्येति ।

२– न अश्व इत्यत्र नञो नकरारस्यलोपे तत्परिशिष्टाऽकारस्यनुट्, टकारइत्, उकार उच्चारणार्थः, टित्वादाद्यवयवः ।

३– गतिसंज्ञायां 'कुगतिप्रादयः इति समासे ल्यपि रूपम् ।

४– अशुक्लं शुक्लं कृत्वेत्यर्थः । 'कृम्वस्तियोगे' इत्यभूततद्भावे च्विः । गतिसमासे सति क्त्वो ल्यप् 'वेरपृक्तस्ये' ति वलोपः । 'अस्य च्वौ' इति ईत्वम् ।

५– टपटा इति शब्दंकृत्वेत्यर्थः । 'अव्यक्तानुकरणात् इतिडाच्, डाचिबहुलंद्वे भवतः, इति द्वित्वम्, टिलोपः नित्यमाम्रेडितेडाचि, इति तकारपका–
रयोः पकार एकादेशः, गतिसमासे क्त्वो ल्यप् ।

## आदरानादरयोः सदसती १।४।६३

सत्कृत्य । असत्कृत्य ।

## भूषणेऽलम् (१) १।४।६४

अलङ्कृत्य । भूषणेकिम् ? अलङ्क त्वौदन गतः। पर्याप्तमित्यथः। अनुकरणमित्यादि त्रिसूत्री स्वभावात् कृञ्विषया ।

## अन्तरपरिग्रहे (२) १।४।६५

अन्तर्हत्य । मध्येहत्वेत्यर्थः। अपरिग्रहे किम्? अन्तर्हत्वा गतः, हतं परिगृह्य गत इत्यर्थः ।

## कणे–मनसी श्रद्धाप्रतिघाते (३) १।४।६६

कणेहत्य पयः पिबति । मनोहत्य । कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषाऽतिशये वर्तते। मनस् शब्दोऽप्यत्रैव ।

## पुरोऽव्ययम् (४) १।४।६७

पुरस्कृत्य ।

## अस्तं च १।४।६८

अस्तमिति मान्त मव्ययंगतिसंज्ञक स्यात् । अस्तंगत्य ।

## अच्छ–गत्यर्थवदेषु (५) १।४।६९

अव्ययमित्येव । अच्छगत्य । अच्छोद्य । अभिमुखं गत्वा उक्त्वा चेत्यर्थः । अव्ययं किम् ? जलमच्छं गच्छति ।

---

१– भूषणे विद्यमानमलमित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः ।

२– अपरिग्रहे विद्यमान मन्तरित्यव्ययं गतिसंज्ञकंस्यादित्यर्थः ।

३– कणेशब्दो मनः शब्दश्च श्रद्धाप्रतिघाते=अत्यन्ताभिलाषानिवृत्तौ गतिसंज्ञकौ स्त इत्यर्थः।

४– पुर इत्यव्ययं गतिसंज्ञकं स्यादित्यर्थः ।

५– गत्यर्थधातुषु वदधातौ च प्रयुज्यमाने 'अच्छ' इत्यव्ययं गतिसंज्ञं स्यादित्यर्थः ।

**अदोऽनुपदेशे (१) १।४।७०**

अदःकृत्यादःकृतम् । परं प्रत्युपदेशे प्रत्युदाहरणम् । अदः कृत्वा अदः कुरु ।

**तिरोऽन्तर्द्धौ (२) १।४।७१**

तिरोभूय ।

**विभाषा कृञि (३) १।४।७२**

**तिरसोऽन्यतरस्याम् ८।३।४२**

तिरसः सकारो वा स्या त्कुप्वोः । तिरः कृत्य । तिरस्कृत्य । तिरः कृत्वा ।

**उपाजेऽन्वाजे १।४।७३**

एतौ कृञि वा गतिसंज्ञौ । उपाजेकृत्य । अन्वाजेकृत्य । उपाजे कृत्वा । अन्वाजे कृत्वा । दुर्बलस्य बलमाधायेत्यर्थः ।

**साक्षात्प्रभृतीनिच १।४।७४**

कृञि वा गतिसंज्ञानि स्युः । (**च्व्यर्थ इति वक्तव्यम्**) साक्षात्कृत्य । साक्षात्कृत्वा । लवणंकृत्य । लवणं कृत्वा । मान्तत्वं निपातनात् ।

**अनत्याधान उरसि–मनसो (४) १।४।७५**

उरसिकृत्य । उरसिकृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य । मनसिकृत्वा । निश्चित्येत्यर्थः । अत्याधान मुपश्लेष स्तत्र न। उरसिकृत्वा पाणिंशेते ।

**मध्ये पदे निवचनेच १।४।७६**

एते कृञि गतिसंज्ञा वा स्यु रनत्या धाने । मध्येकृत्य । मध्येकृत्वा । पदेकृत्य । पदे कृत्वा । निवचनेकृत्य । निवचनेकृत्वा । वाचं नियम्येत्यर्थः ।

**नित्यं हस्ते पाणा बुपयमने १।४।७७**

कृञि । उपयमनं=विवाहः । स्वीकारमात्रमित्यन्ये । हस्तेकृत्य । पाणौकृत्य ।

---

१– अदश्शब्दोऽनुपदेशे गतिसंज्ञः स्यादित्यर्थः ।

२– अन्तर्धिः = व्यवधानम् । तत्र तिरस् इत्यव्ययं गतिसंज्ञकं स्यादित्यर्थः ।

३– कृञि प्रयुज्यमाने तिरस् इत्यव्ययं गतिसंज्ञं वा स्यादित्यर्थः।

४– अनत्याधाने=अनुपश्लेषे 'उरसि' 'मनसि' इति विभक्तिप्रतिरूपकं अव्यये गतिसंज्ञे स्त इत्यर्थः ।

## प्राध्वं बन्धने १।४।७८

प्राध्वमित्यव्ययम् । प्राध्वंकृत्य । बन्धनेनानुकूलं कृत्वेत्यर्थः । प्रार्थनादिना त्वानुकूल्यकरणं–प्राध्वंकृत्वा ।

## जीविकोपनिषदा वौपम्ये (१) १।४।७९

जीविकामिव कृत्वा– जीविकाकृत्य । औपम्ये किम् ? जीविकांकृत्वा । प्रादिग्रहणमगत्यर्थम् । सुपुरूषः । (प्रादया गताद्यर्थे प्रथमया) प्रगत आचार्यः प्राचार्यः (अत्यादयः क्रान्ताद्यर्थे द्वितीयया) अतिक्रान्तोमालामिति विग्रहे–

## एकविभक्ति चापूर्वनिपाते १।२।४४

विग्रहे यन्नियतविभक्तिकं तदुपसर्जनं नतु तस्य पूर्वनिपातः ।

## गोस्त्रियोरुपसर्जनस्य १।२।४८

उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः । अतिमालः । **(अवादयः क्रुष्टाद्यर्थेतृतीयया)** अवक्रुष्टः कोकिलया अवकोकिलः। **(पर्यादयोग्लानाद्यर्थे चतुर्थ्या)** परिग्लानोऽध्ययनाय पर्यध्ययनः । **(निरादयः क्रान्ताद्यर्थे पञ्चम्या)** निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः १ ।

## तत्रोपपदं सप्तमीस्थम् (२) ३।१।९२

## उपपदमतिङ २।२।१९

उपपदं समर्थेन नित्यं समस्यते । अतिङन्तश्चायं समासः । कुम्भंकरोतीति कुम्भकारः । अतिङ किम् ? माभवान्भूत् । माङि लुङिति सप्तमीनिर्देशान्माङुपपदम् । **( गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः)** व्याघ्री (३) । कच्छपी । अश्वक्रीतीत्यादि ।

---

१– उपमैव=औपम्यम् । तस्मिन्विषये जीविकाशब्दः, उपनिषच्छब्दश्च कृञायोगे गतिसंज्ञौ स्त इत्यर्थः ।

१– उपसर्जनत्वात् 'गोस्त्रियो' रिति ह्रस्वः ।

२– सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात् तस्मिंश्च सत्येव वक्ष्यमाणाः प्रत्ययाः ।

३– विशेषेण आसमन्तात् जिघ्रतीति व्याघ्री 'आतश्चोपसर्गे' इति कप्रत्ययः । व्याङः (सुबुत्पत्तेः प्राक्) घ्रशब्देन गतिसमासः, स्त्रियां जातिलक्षणो ङीष् । अन्यथा (सुबन्तेन समासेतु), केवलस्य घ्रशब्दस्य जातिवाचकत्वाभावात् जाति

**अमैवाव्ययेन २।२।२०**

अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते । स्वादुङ्कारम् । 'स्वादुमि णमुल्' इति णमुल् । नेह । 'कालसमयवेलासु तुमुन्' । कालः समयो वेला वा भोक्तुम् । अमैवेति किम्?अग्रे भोजम् । अग्रे भुक्त्वा । विभाषाग्रे प्रथमपूर्वेष्विति क्त्वाणमुलौ अमा चान्येन च तुल्यविधानमेतत् ।

**तृतीयाप्रभृतीन्यन्यतरस्याम् २।२।२१**

उपदंशस्तृतीयाया मित्यादीन्युपपदान्य मन्तेनाव्ययेन सह वा समस्यन्ते । मूलकेनोपदंशं भुङ्क्ते– मूलकोपदंशम् । उपदंशस्तृतीयायामिति णमुल् ।

**क्त्वा च २।२।२२**

तृतीया प्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते । उच्चैः कृत्य । उच्चैः कृत्वा ।

**अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ३।४।५६**

**तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ५।४।८६**

संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य– द्व्यङ्गुलम्(१) । निरङ्गुलम् (२)।

**अहः सर्वैकदेश–संख्यात–पुण्याच्च रात्रेः ५।४।८७**

एभ्यो रात्रेरच् स्यात्, चात्संख्याव्ययादेः । अहर्ग्रहणं द्वन्द्वार्थम्(३) ।

**रात्राह्नाहाः पुंसि २।४।२९**

एते पुंस्येव । अहश्च रात्रिश्च– अहोरात्रः । सर्वरात्रः । पूर्वरात्रः । संख्यातरात्रः । (संख्यापूर्वं रात्रं क्लीबम्) द्विरात्रम् । त्रिरात्रः ।

---

लक्षणो ङीष् न स्यात्, किन्तु टाप् स्यात् । कच्छपी–इत्यत्र कच्छेन पिबतीति क प्रत्ययः, जातिलक्षणो ङीष्, व्याघ्रीवत् । अश्वक्रीति–इत्यत्र अश्वेन क्रीता इति विग्रहः 'क्रीतात्करणपूर्वात्' इति ङीष् । अत्रापि सुबुत्पत्तेः प्रागेव समासः । सुबन्तेन समासे तु टाप् स्यात्, न तु ङीष् ।

१– 'तद्धितार्थे' इति द्विगुः, 'प्रमाणे ल.. ..' इति लुक् । द्व्यङ्गुलिशब्दादचि तस्य तद्धितत्वात् तस्मिन्परे 'यस्येतिच' इतीकारलोपः ।

२– 'निरादयः क्रान्ताद्यर्थे' इति समासः, अच्, इलोपः ।

३– 'अह्नो रात्रिः' इति षष्ठीतत्पुरुषस्याऽसम्भवात् इति ।

**राजाहः सखिभ्यष्टच् ५।४।९१**

एतदन्तात्तत्पुरुषात् टच् । परमराजः । कृष्णसखः ।

**अह्नष्टखोरेव ६।४।१४५**

टिलोपः । परमाहः ।

**अह्नोऽह्न एतेभ्यः ५।४।८८**

सर्वादिभ्योऽह्न् शब्दस्याह्नादेशः समासान्ते परे ।

**अह्नोऽदन्तात् ८।४।७**

अदन्त पूर्वपदस्थान्निमित्ता दह्नो नस्य णः । सर्वाह्णः

**न संख्यादेः समाहारे(१) ५।४।८९**

अह्नोऽह्नादेशो न । द्व्यहः ।

**उत्तमैकाभ्यां च ५।४।९०**

अह्नोऽह्नादेशो न । उत्तमशब्दोऽन्त्यार्थः पुण्यशब्दमाह (२) ( पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा) पुण्याहम् । सुदिनाहम् । एकाहः ।

**अग्राख्यायामुरसः ५।४।९३**

टच् । आश्वाना मुर इव अश्वोरसम् । मुख्योऽश्व इत्यर्थः ।

**ग्रामकौटाभ्यां च तक्ष्णः(१) ५।४।९५**

ग्रामतक्षः ।(२) कौटतक्षः ।(३)

**अतेः शुनः(४) ५।४।९६**

अतिश्वो वराहः ।

---

१– समाहारे वर्तमानस्य सङ्ख्यादेरह्नादेशो न स्यादित्यर्थः ।

२– अन्त्यत्वं च पुण्यशब्दस्य 'अहः सर्वैकदेश.. ..' इतिसूत्रनिर्दिष्टं बोध्यम् ।

३– ग्रामकौटाभ्यां परो यस्तक्षन् शब्दस्तदन्तात्तपुरुषात् टच्स्यादित्यर्थः ।

४– साधारण इत्यर्थः । ग्रामे यावन्तो जनाः सन्ति तावतां विधेय इति भावः । टचि टिलोपः ।

५– स्वतन्त्र इत्यर्थः । कुटीमेकां सम्पाद्य तत्र बसति नतु परकीयभूमौ ।

६– अतीत्यव्ययात्परो यः श्वन् शब्दस्तदन्तात् तत्पुरुषात् टजित्यर्थः ।

**उपमानादप्राणिषु ५।४।९७**

अप्राणिविषयोपमानवाचिनः शुनष्टप् । आकर्षश्वेव आकर्षश्वः ।(१)

**उत्तरमृगपूर्वाच्चसक्थ्म् ५।४।९८**

चादुपमानात् । उत्तरसक्थम् । पूर्वसक्थम् । फलकमिव सक्थि—फलकसक्थम् ।

**नावो द्विगोः (२) ५।४।९९**

द्विनावम् । त्रिनावम् ।

**अर्धाच्च ५।४।१००**

अर्धनावम् ।

**खार्याः प्राचाम् ५।४।१०१**

द्विगोरर्धाच्च खार्याष्टज्वा । द्विखारम् । द्विखारि । अर्धखारम् । अर्धखारि ।

**द्वित्रिभ्यामञ्जलेः ५।४।१०२**

द्व्यञ्जलम् । द्व्यञ्जलि ।

**ब्रह्मणो जानपदाख्यायाम् ५।४।१०४**

ब्रह्मान्तात्तत्पुरुषाट्टच् । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः (३) ।

**कुमहद्भ्यामन्यतरस्याम् (४) ५।४।१०५**

कुब्रह्मः कुब्रह्मा । महाब्रह्मः। महाब्रह्मा । 'प्रकारवचने जातीयर्' । महाप्रकारा महाजातीयः ।

**द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ६।३।४७**

आत्स्यात् । द्वादश । अष्टादश ।अबहुव्रीह्यशीत्योः किम् ? द्वित्राः। द्व्यशीतिः। (**प्राक्शताद्वक्तव्यम्**) नेहद्विशतम् ।

---

(१) आकृष्यते कुसूलादिगतधान्यमनेनेत्याकर्षः = पञ्चाङ्गुलो दारुविशेषः । 'उपमितं व्याघ्रादिभि'रिति समासः, टच्, टिलोपः

(२) नौशब्दाद् द्विगोष्टच् न तु तद्धितलुकि ।

(३) सप्तमीति योगविभागात्समासः । टच्, टिलोपः, 'परवल्लिङ्गम्' इति पुंस्त्वम् । जानपदेति किम्? देवब्रह्मा (नारदः)।

(४) आभ्यां ब्रह्मणो वा टच् स्यात्तत्पुरुषे इत्यर्थः ।

**त्रेस्त्रयः ६।३।४८**

त्रिशब्दस्य त्रयसादेशः स्यात्पूर्वविषये । त्रयोदश । त्रयोविंशतिः ।

**विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ६।३।४९**

द्व्यष्टन स्त्रेश्च प्रागुक्तं वा चत्वारिंशदादौ परे । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । एवं पञ्चाशत्–षष्टि –सप्तति नवतिषु ।

**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः २।४।२६**

कुक्कुटमयूर्यौ विमौ । मयूरी कुक्कुटा विमौ । अर्धपिप्पली । **(द्विगु प्राप्तापन्नालं पूर्वगतिसमासेषु न)** पञ्चसु कपालेषु संस्कृतः पञ्चकपालः = पुरोडाशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलंकुमारिः । अत एव ज्ञापकात् समासः । निष्कौशाम्बिः ।

**पूर्ववदश्ववडवौ २।४।२७**

द्वित्वमतन्त्रम् अश्ववडवौ । अश्ववडवान् ।

**अपथं नपुंसकम् २।४।३०**

तत्पुरुष इत्येव । अन्यत्रतु अपथो देशः । कृतसमासान्तग्रहणान्नेह । अपन्थाः । **(अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः)** पञ्चमूली । **(आबन्तो वा)** पञ्चखट्वम् । पञ्चखट्वी । **(पात्राद्यन्तस्य न)** पञ्चपात्रम् । त्रिभुवनम् । चतुर्युगम् ।

**छायाबाहुल्ये २।४।२२**

छायान्तस्तत्पुरुषो नपुंसकं स्यात् पूर्वपदार्थबाहुल्ये । इक्षूणां छाया इक्षुच्छायम् ।

**सभाराजाऽमनुष्यपूर्वा २।४।२३**

राजपर्यायपूर्वोऽ मनुष्य पूर्वश्च समासान्त स्तत्पुरुषो नपुंसकं स्यात् । इनसभम् (१) । ईश्वसभम् । अमनुष्यशब्दोरुढया रक्षः पिशाचादीनाह । रक्षः सभम् । पिशाचसभम् ।

**विभाषा सेनासुराच्छाया–शाला निशानाम् २।४।२५**

एतदन्त स्तत्पुरुषः क्लीबं स्यात् । स्त्रीसभम् । स्त्रीसङ्घात इत्यर्थः । अशाला किम् ? धर्मसभा । धर्मशालेत्यर्थः ।

**अर्धर्चाः पूंसि च २।४।३१**

अर्धर्चादयः पुंसि क्लीबे च स्युः । अर्धर्चः । अर्धर्चम् । एवं ध्वज–तीर्थ–शरीर–मण्डप–यूष–देहाङ्कुश–कलश–सूत्र–पात्रादयः । **(सामान्ये नपुंसकम्)** मृदु पचति । प्रातः कमनीयम् ।

**इति तत्पुरुषः ।**

---

(१) इनेश्वरशब्दौ राजपर्यायाविति भावः ।

## अभ्यासः

**प्रश्न १. तत्पुरुषसमासे कस्य पदार्थस्य प्राधान्यं भवति ?**

उ. तत्पुरुषसमासे प्रायेण उत्तरपदार्थस्य प्राधान्यं भवति ।

**प्रश्न २. अर्धपिप्पली इत्यस्य साधुत्वप्रकारो दर्शनीयः**

उ. अर्धं पिप्पल्या इति लौकिक विग्रहे अर्ध + सु पिप्पली ङस् इत्यत्र नपुं-सकम्' इति समासे समासत्वात् प्रातिपदिकत्वेन सुपो लुकि अर्धशब्दस्य उपसर्जन संज्ञायां तस्य पूर्वप्रयोगे समुदायात् सौ विभक्ति कार्ये च अर्ध पिप्पली इति ।

**प्रश्न ३. परमराजः इति साधु साधनीयः**

उ. परमश्चासौ राजा इति लौकिक विग्रहे परम + सु राजन् + सु इत्यलौकिक विग्रहे 'सन्महत्परमोत्कृष्टाः पूज्यमानैः' इति समासे समासत्वात् प्रातिपदिकत्वेन सुपो लुकि उपसर्जनत्वे प्राक्प्रयोगे ततो 'राजाहः सखिभ्यष्टच्' इति टचि 'नस्तद्धिते' इति टिलोपे समुदायात्सौ रुत्वविसर्गयोः 'परमराजः' इति सिद्धम् ।

## अभ्यासार्थं प्रश्नाः

(१) शङ्कुलाखण्डः, प्राप्तजीवनः, सप्तर्षयः, पौर्वशालः, पञ्चगवम्, महावैयाकरणः, खाद-तमोदता, अब्राह्मणः, ऊरीकृत्य, प्राचार्यः, व्याघ्री, द्वयङ्गुलम्, कृष्णसखः, पञ्चकपालः, इक्षुच्छायम् एतेषां निष्पत्तिप्रकारं सम्यक् प्रतिपादयत ।

(२) **अधोऽङ्कितानां सूत्राणामर्थान् विलिख्य तेषामेकैमुदाहरणञ्च देयम्**

(क) कर्तृकरणे कृताबहुलम् (ख) क्तेन च पूजायाम्
(ग) दिक्संख्ये च संज्ञायाम् (घ) विशेषणं विशेष्येण बहुलम्
(ङ) पुरोऽव्ययम् (च) क्त्वा च

(३) द्विगुसमासस्य कर्मधारयसमासस्य च लक्षणं विलिख्य तयोरेकैकंमुदाहरणञ्च देयम् ।

(४) चोरभयम्, पूर्वकायः, अक्षशौण्डः, पञ्चगवधनः, खाट्कृत्य, अतिमालः, पुण्याहम् एषु प्रवर्तमानानि विशेषसूत्राणि विलिख्य तेषां कार्याणि च निर्दिशत ।

(५) **विग्रहवाक्यानि विलिख्यन्ताम्**

(क) अकिंचनः (ख) अकुतो भयः (ग) पर्यध्ययनः
(घ) द्वयङ्गुलम् (ङ) चिन्मात्रम् (च) उरसिकृत्य

(५) विग्रहानुसारं समस्तपदानि विलिखत

(क) गुडेन मिश्रा धानाः (ख) पूर्वं कायस्य (ग) मासो जातो यस्य सः
(घ) व्याघ्र इव पुरुषः (ङ) अन्यो राजा
(च) मूलकेन उपदंश भुङ्क्ते (छ) ब्राह्मणानां सेना

(६) वाक्कलहः, पौर्वशालः, पञ्चगवधनः, कुपुरुषः, सुपुरुषः, पूर्वरात्रः, स्त्रीसभम्, एतानि पदानि प्रयुज्य पृथक् पृथक् वाक्यानि विरचयत ।

(७) अधस्तनानां वाक्यानां समस्तपदानि शोधनीयानि

(क) भीमसेनस्य पुत्रो घटोत्कचः पितासमो बलवान् बभूव
(ख) कविशिरोमणिर्लेखनाथो राजसंमतः कविरासीत् ।
(ग) हरिप्रसादः स्वप्रियाया उरसिकृत्य पाणिं शेते ।
(घ) शिवरात्रिः सर्वेषां हिन्दूनां कृते पुण्याहोऽस्ति ।
(ङ) धार्मिका अवकाशस्य दिने धर्मसभं गच्छन्ति ।

# अथ बहुव्रीहिसमासः

**शेषो बहुव्रीहिः (१) २।२।२३**

अधिकारोऽयं प्राग्द्वन्द्वात् ।

**अनेकमन्यपदार्थे २।२।२४**

अनेकं प्रथमान्तमन्यपदार्थे वर्तमानं वा समस्यते, स बहुव्रीहिः ।

**सप्तमीविशेषणे बहुव्रीहौ २।२।३५**

सप्तम्यन्तं विशेषणं बहुव्रीहौ पूर्वं स्यात् ।

**हलदन्तात्सप्तम्याः संज्ञायाम् ६।३।६**

हलन्तादकन्ताच्च सप्तम्या अलुक् । कण्ठेकालः । अत एव (२) ज्ञापकात् व्यधिकरणपदो बहुव्रीहिः । प्राप्तमुदकं यं स प्राप्तोदको = ग्रामः । ऊढरथोऽनड्वान् । उपहृत पशू रुद्रः । उध्दृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषको ग्रामः । (**प्रादिभ्यो धातुजस्य (३) वाच्यो वा चोत्तरपदलोपः**) प्रपतितपर्णः प्रपर्णः । (**नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः**) अविद्यमानपुत्रोऽपुत्रः ।

**स्त्रियाःपुंवद्भाषित पुंस्कादनूङ समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६।३।३४**

उक्त पुंस्कात्पर ऊङभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः । गोस्त्रियोरिति ह्रस्वः ।

---

(१) उक्तादन्यः शेषः, द्वितीया श्रितेत्यादिना (शास्त्रेण) यस्य त्रिकस्य (विभक्तेः) विशिष्य समासोनोक्तः सशेषः = प्रथमान्त इत्यर्थः ।

(२) प्रथमान्तानामेव बहुव्रीहिरिति सप्तम्यन्तस्य तत्र सम्भव एव नास्तीति सप्तम्यन्तस्य 'सप्तमी विशेषणे.. ..' इति सूत्रे पूर्वनिपात विधानं व्यर्थं सद ज्ञापयति 'भवति व्यधिकरणपदोऽपि बहुव्रीहिः क्वचिदि' ति । यथा कण्ठेकालः । शरेभ्यो जन्म यस्य स शरजन्मा = कार्तिकेयः ।

(३) प्रादिभ्यः परं यद् धातुजप्रकृतिकं प्रथमान्तं तस्यान्येन प्रथमान्तेन बहुव्रीहिर्वाच्यः । तत्र बहुव्रीहौ प्रादिभ्यः परस्य उत्तरपदस्य धातुजस्य लोपश्च विकल्पेन वाच्य इत्यर्थः ।

चित्रगुः। रूपवद्भार्यः । अनूङः किम् ? वामोरुभार्यः (१) पूरण्यां तु–

### अप्पूरणीप्रमाण्योः ५।४।११६

पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमाः(२) = रात्रयः । स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः । पुंवद्भाव निषेधोऽप्प्रत्ययश्च प्रधानपूरण्यामेव(३)। रात्री पूरणीवाच्या(४)चेत्युक्तोदाहरणे मुख्या । अन्यत्र तु

### नद्यृतश्च ५।४।१५३

नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप् । पुंवद्भावः ।

### केऽणः ७।४।१३

के परेऽणो ह्रस्वः। इति प्राप्ते

### न कपि ७।४।१४

ह्रस्वः । कल्याणपञ्चमीकः=पक्षः । अत्र तिरोहितावयवभेदस्य(५) पक्षस्यान्यपदार्थतया रात्रिरप्रधानम् । बहुकर्तृकः । अप्रियादिषु किम् ? कल्याणीप्रियः । प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्तिः । सचिवा । स्वसा । कान्ता । क्षान्ता ।

---

(१) वामौ=सुन्दरौ ऊरू यस्या इति बहुव्रीहिः । 'संहितशफलक्षणवामादेश्च' इत्यूङ । पुंस्त्वनिषेधः। अन्यथा । 'वामोरुभार्यः' इति स्यान ।

(२) इह बहुव्रीहौ कृते पञ्चमी शब्दे पूरणार्थप्रत्ययान्ते परे कल्याणीशब्दस्य पुंस्त्वनिषेध अप्, "यस्येति चे" तीकारलोपः ।

(३) 'स्त्रियाः पुंवत्' इति सूत्रे अप्पूरणी' इति सूत्रे च प्रधानपूरणी ग्रहणं कर्तव्यमिति भावः ।

(४) ननु कल्याणी पञ्चमा रात्रय इत्यत्र पञ्चम्या रात्रेः समस्यमानपदार्थत्वात् कथं प्राधान्यम्, बहुव्रीहेरन्यपदार्थप्रधानत्वादित्यत आह– रात्रिः पूरणी वाच्येति । उक्तोदाहरणे पञ्चानां पूरणी रात्रिः समस्यमानपञ्चमी पदार्थत्वेऽपि अन्यपदार्थसमुदायघटकतया बहुव्रीहिसमासवाच्याऽपि भवतीति कृत्वा मुख्या भवति इत्यर्थः ।

(५) रात्रेस्तत्प्रदेशाभावाद् अप्राधान्यमिति भावः।

समा । चपला । दुहिता । वाला । वामा । अबला । तनया– इति प्रियादय.। (सामान्ये नपुंसकम्) दृढं भक्तिर्यस्य स दृढभक्तिः ।

**तसिलादिष्वाकृत्वसुचः ६।३।३५**

तसिलादिषु कृत्वसुजन्तेषु स्त्रियाः पुंवत् । परिगणनं कर्तव्यम् । त्र–तसौ । तरप्त-मपौ । चरट्–जातीयरौ । कल्पब्–देशीयरौ । रूपप्–पाशपौ । थाल् । तिलथ्यनौ । एषु परेषु स्त्रियाः पुंवत् । बह्वीषु इति बहुत्र । बहुत इत्यादि । (**त्वतलो र्गुणवचनस्य** (१)) शुक्ल-त्वम् । शुक्लता । (**भस्याढे तद्धिते** (२)) हस्तिनीनां समूहो हास्तिकम् (३) । अढे किम् ? रौहिणेयः। (**कुक्कुट्यादीना मण्डादिषु** (४)) कुक्कुटाण्डम् (५) । मृगपदम् । मृगक्षीरम् । काकशावः ।

**क्यङ्मानिनोश्च ६।३।३६**

पुंवत् (६)। एनीवाचरति एतायते(७) । श्येनीवाचरति श्येतायते (८)। दर्शनीयां स्त्रियं (स्व भिन्नां काञ्चित्) मन्यते दर्शनीयमानिनी (९) ।

**न कोपधायाः ६।३।३७**

स्त्रिया न पुंवत्। पाचिकाभार्यः। रसिकाभार्यः। मद्रिकायते। मद्रिकामानिनी । (**कोपधप्रतिषेधे तद्धितवुग्रहणम्** (१०)) नेह । पाकभार्यः (११)।

---

(१) त्वप्रत्यये तल् प्रत्यये च परे गुणोपसर्जनद्रव्यवाचिनः पुंवत्त्वं वक्तव्यमित्यर्थ ।

(२) ढ भिन्ने तद्धिते परे स्त्रियाः पुंवत्त्वं वक्तव्यमित्यर्थः। परिगणिते ष्वनन्तर्भावाद्वचनमिदम् ।

(३) 'अचित्त हस्ति धेनोः' इति ठक् ।

(४) पुंवत्त्वं वक्तव्यमिति शेष : ।

(५) कुक्कुट्या अण्डमिति विग्रहः ।

(६) क्यङि मानिनि च उत्तरपदे परत एतयोः पुंवत्वं स्यादित्यर्थः ।

(७) एता=चित्रवर्णा । 'वर्णादनुदात्तात्' इति ङीप् नकारश्च । उपमानादाचारे 'कर्तुः क्यङ सलोपश्च'इत्येनीशब्दात्क्यङि 'अकृत्सार्वधातुकयो' रिति दीर्घः ।

(८) श्येतः=श्वेतः। क्यङादि पूर्ववत् ।

(९) 'मनश्च' इति णिनिप्रत्ययः । उपपदसमासः । 'ऋन्नेभ्यः' इति ङीप् ।

(१०) तद्धित संबन्धी वुसबन्धी च यः ककारस्तदुपधायाः स्त्रिया न पुंवत्त्वमिति भावः । मद्रिकायते इति तद्धितकोपधोदाहरणम् । पाचिकाभार्य इति वुसंबन्धीकोपधोदाहरणम ।

(११) नायं ककारस्तद्धितस्य वुप्रत्ययस्य वा किन्तु–उणादिकप्रत्ययो निपातितः "अर्भक पृथुकपाका वयसि" इति सूत्रेण ।

**संज्ञापूरण्योश्च ६।३।३८**

अनयोर्न पुंवत् । दत्ताभार्यः पञ्चमीभार्यः ।

**वृद्धि निमित्तस्य तद्धितस्यारक्तविकारे ६।३।३९**

वृद्धिशब्देन विहिता या वृद्धि तद्धेतुर्य स्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत् । स्रौघ्नीभार्यः । रक्तेतु काषायकन्थः। विकारेतु हैममुद्रिकः (१) ।

**स्वाङ्गाच्चेतः ६।३।४०**

स्वाङ्गाद्य ईकारस्तदन्ता स्त्री न पुंवत् । सुकेशीभार्यः (२) । स्वाङ्गात्किम् ? पटुभार्यः। ईतः किम्? अकेशभार्यः। (**अमानिनोति (३) वक्तव्यम्**) सुकेशमानिनी(४) ।

**जातेश्च ६।३।४१**

न (५) पुंवत्। ब्राह्मणीभार्यः । शूद्राभार्यः ।

**संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये (६) २।२।२५**

सख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते स बहुव्रीहिः ।

**बहुव्रीहौ संख्येये डजबहुगणात् ५।४।७३**

संख्येये यो बहुव्रीहि स्तस्माड्डच् समासान्तः। दशानां समीपे **ये सन्ति ते उपदशाः** । अबहुगणात्किम् ? उपबहवः । उपगणाः ।

**ति विंशतेर्डिति ६।४।१४२**

विंशतेर्भस्य टेर्लोपो डिति । आसन्नविंशाः । विंशतेरासन्ना **इत्यर्थः** । **अदूरविंशाः** । अधिकचत्वारिंशाः । द्वौ वा त्रयो वा– द्वित्राः ।

---

(१) हैमीत्यत्र 'अनुदात्तादेश्च' इत्यञ्, टिलोपः, आदिवृद्धिः 'टिड्ढा' **इति ङीप्** । हैमी मुद्रिका यस्य ।

(२) सु=शोभना केशा यस्याः **सा** सुकेशी 'स्वाङ्गाच्चोपसर्जनात्' इति ङीष्, 'स्त्रियाः पुंवत्' इति प्राप्तस्य निषेधः ।

(३) स्वाङ्गाच्चेति निषेधो मानिन् शब्दे परतो न भवतीति वक्तव्यमित्यर्थः ।

(४) सुकेशीं मन्यते इत्यर्थे 'मनश्च' इति णिनिः, उपधावृद्धिः, उपपदसमासः, सुपो लुक् । पुंवत्त्वे ङीषो निवृत्तिरिति भावः ।

(५) जातेः परो यः स्त्रीप्रत्ययस्तदन्त न पुंवत् इत्यर्थः।

(६) सामानाधिकरण्यस्यान्यपदार्थवृत्तेश्च विरहात्पूर्वेणाप्राप्तौ वचनम्।

**दिङ्नामान्यन्तराले २।२।२६**

दिशो नामान्यन्तराले वाच्ये प्राग्वत् । दक्षिणस्याः पूर्वस्याश्च दिशो यदन्तरालं–दक्षिणपूर्वा ।

**तत्र तेनेदमिति सरूपे २।२।२७**

सप्तम्यन्ते ग्रहणविषये सरूपोपपदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे ।

**इच् कर्मव्यतिहारे ५।४।१२७**

**अन्येषामपि दृश्यते ६।३।१३७**

दीर्घः। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं–केशाकेशि (१) । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि । मुष्टीमुष्टि ।

**तेन सहेति तुल्ययोगे २।२।२८**

तुल्ययोगे वर्तमानं सहेत्यन्तं तृतीयान्तेन प्राग्वत् ।

**वोपसर्जनस्य ६।३।८२**

बहुव्रीहेरवयवस्य सः स्याद्वा। पुत्रेण सह सपुत्रः सहपुत्रो वागतः ।

**प्रकृत्याशिषि ६।३।८३**

सहशब्दः। स्वस्ति राज्ञे सहपुत्राय सहामात्याय। (अगोवत्स हलेष्विति वक्तव्यम्) सगवे। सवत्साय। सहलाय।

**बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ५।४।११३**

स्वाङ्गवाचिनः सक्थ्यन्ताद् बहुव्रीहेः षच्। दीर्घसक्थः ।
जलजाक्षी। स्वाङ्गात्किम् ? दीर्घसक्थि (२) = शकटम् । स्थूलाक्षा (३) = वेणुयष्टिः। अक्ष्णोर्दर्शनादिति वक्ष्यमाणोऽच् ।

**द्वित्रिभ्यां ष मूर्ध्नः ५।४।११५**

आभ्यां मूर्ध्नः षः स्याद् बहुव्रीहौ। द्विमूर्धः। त्रिमूर्धः ।

---

(१) अव्ययत्वात्सुपो लुगिति भावः। एवमग्रेऽपि ।
(२) दीर्घे सक्थिनी (सक्थिसदृशौ ईषादण्डौ यस्येति विग्रहः प्राणिस्थस्यैवाङ्गसंज्ञेति न षच्।
(३) स्थूलानि अक्षाणि=पर्वग्रन्थयो यस्या इति विग्रहः। अस्वाङ्गत्वादिह न षच् इति भावः।

**अन्तर्बहिर्भ्यां च लोम्नः ५।४।११७**

अप् स्यात्। अन्तर्लोमः। बहिर्लोमः।

**पादस्य लोपोऽहस्त्यादिभ्यः ५।४।१३८**

हस्त्यादिवर्जितादुपमानात्परस्य पादस्य लोपः। व्याघ्रस्येव पादौ यस्य व्याघ्रपात् (१)। अहस्त्यादिभ्यः किम्? हस्तिन इव पादौ यस्य हस्तिपादः। कुसूलपादः।

**संख्यासुपूर्वस्य ५।४।१४०**

पादशब्दस्य लोपः। द्विपात्। सुपात्।

**उद्विभ्यां काकुदस्य ५।४।१४८**

लोपः। उत्काकुत्(२)। विकाकुत्।

**पूर्णाद्विभाषा ५।४।१४९**

पूर्णकाकुत्। पूर्णकाकुदः।

**सुहृद्दुर्हृदौ मित्रामित्रयोः(३) ५।४।१५०**

सुहृन्मित्रम्। दुर्हृदमित्रः। (**नेतुर्नक्षत्रे अब्वक्तव्यः**(४)) मृगो नेता यासां रात्रीणां ताः मृगनेत्राः=रात्रयः।

**अञ् नासिकायाः संज्ञायां नसं चास्थूलात् ५।४।११८**

नासिकान्ताद् बहुव्रीहेरच् नासिकाशब्दश्च नसं प्राप्नोति न तु स्थूलपूर्वात्।

**पूर्वपदात्संज्ञायामगः ८।४।३**

पूर्वपदस्तान्निमित्तात्परस्य नस्य णो नतु गकारव्यवधाने। द्रुरिव नासिका यस्य द्रुणसः। (**खुर खराभ्यां (५) वानस्**) खुरणाः। खरणाः। पक्षे अजपीष्यते। खुरणसः। खरणसः।

---

(१) व्याघ्रपादाविव पादौ यस्येति विग्रहः। 'सप्तम्युपमानपूर्वपदस्ये'ति समासः।

(२) उन्नतं काकुदं=तालु यस्येति विग्रहः।

(३) सुदुर्भ्यां हृदयस्य हृद भावो निपात्यते। शोभनं हृदयं यस्येति विग्रहः।

(४) नक्षत्रे विद्यमानो यो नेतृशब्दस्तदन्ताद् बहुव्रीहेरप् वक्तव्य इत्यर्थः। मृगः मृगशीर्षम्। नेता=नायकः।

(५) खुरखराभ्यां परस्य नासिकाशब्दस्य बहुव्रीहौ संज्ञायां नसादेशो वा वक्तव्य इत्यर्थः। खुरणाः, खरणाः इत्यत्र खुरौ इव नासिके यस्य, खररूपा नासिका यस्येति विग्रहः। नसादेशः, पूर्वपदादिति णत्वम्, "अत्वसन्तस्ये"ति दीर्घः।

**उपसर्गाच्च (१) ५।४।११९**

उन्नसः। (वेर्ग्रो वक्तव्यः(२)) विगता नासिकाऽस्य विग्रः। (ख्यश्च(३)) विख्यः।

**नञ्-दुः-सुभ्यो हलि-सक्थ्योरन्यतरस्याम् ५।४।१२१**

अच् वा स्यात्। अहलः अहलिः। असक्थः। असक्थि.। एवं दुःसुभ्याम्। शक्त्योरिति पाठान्तरम्।

अशक्तः। अशक्तिः।

**नित्यमसिच् प्रजामेधयोः ५।४।१२२**

नञ्दुःसुभ्य एव। अप्रजाः। अमेधाः। दुर्मेधाः। सुमेधाः।

**धर्मादनिच् केवलात् ५।४।१२४**

केवलपूर्वपदाद्यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच्। कल्याणधर्मा। केवलात्किम्? परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत्। परमस्वधर्मः। इच् कर्मव्यतिहारे– केशाकेशि। मुसलामुसलि।

**प्रसंभ्यां जानुनोर्ज्ञुः (४) ५।४।१२९**

प्रज्ञुः। संज्ञुः।

**ऊर्ध्वाद्विभाषा (५) ५।४।१३०**

ऊर्ध्वज्ञुः। ऊर्ध्वजानुः।

**ऊधसोऽनङ् (६) ५।४।१३१**

**धनुषश्च ५।४।१३२**

धनुरन्ताद्बहुव्रीहेरनङादेशः। शार्ङ्गधन्वा (७)।

---

(१) प्रादेर्यो नासिकाशब्दस्तदन्ताद् बहुव्रीहेरच्, नासिकाया नसादेशश्च।

(२) वेः परो यो नासिकाशब्दः स ग्रादेशम्प्राप्नोतीति भावः।

(३) नासिकायाः ख्यादेशश्च भवतीत्यर्थः।

(४) आभ्यां परयोर्जानुशब्दयोर्ज्ञुरादेशः स्याद् बहुव्रीहावित्यर्थः।

(५) ऊर्ध्वशब्दात्परो यो जानुशब्दस्तस्य ज्ञुरादेशो वा स्याद् बहुव्रीहावित्यर्थः।

(६) ऊधोऽन्तस्य बहुव्रीहेरनङादेशः स्यात्स्त्रियाम्।

(७) शार्ङ्गधनुः शब्दे सकारस्यानङ, ङकार इत्, अकारउच्चारणार्थः, उकारस्य यण्, दीर्घो नलोपश्चेति भावः।

**वा संज्ञायाम् (१) ५।४।१३३**

शतधन्वा । शतधनुः ।

**जायाया निङ् ५।४।१३४**

जायान्तस्य बहुव्रीहेर्निङादेशः ।

**लोपो व्योर्वलि ६।१।६६**

युवतिर्जाया यस्य युवजानिः ।

**गन्धस्येदुत् – पूति–सु–सुरभिभ्यः (२) ५।४।१३५**

उद्गन्धिः । पूतिगन्धिः । सुगन्धिः (३) ।

**उपमानाच्च (४) ५।४।१३७**

पद्मस्येव गन्धोऽस्य– पद्मगन्धिः ।

**वयसि दन्तस्य दतृ ५।४।१४१**

संख्यासुपूर्वस्येत्येव । द्विदन् । चतुर्दन् ।

**अग्रान्त–शुद्ध–शुभ्र–वृष–वराहेभ्यश्च ५।४।१४५**

एभ्यो दन्तस्य दतृ वा । कुड्मलाग्रदन्तः । कुड्मलाग्रदन् ।

**उरःप्रभृतिभ्यः कप् ५।४।१५१**

व्यूढोरस्कः (५) । प्रियसर्पिष्कः (६) । (**अर्थान्नञः**(७)) अनर्थकम् । नञः किम् ? अपार्थम् ।

---

(१) धनुषश्च, इत्युक्तोऽनङ संज्ञायां वा स्यादित्यर्थः । शतधन्वा = राजविशेषः (स्यमन्तकोपाख्याने प्रसिद्धः) ।

(२) उत्, पूति, सु, सुरभि एतेभ्यो गन्धस्येकारोऽन्तादेशः स्यादित्यर्थः ।

(३) सर्वत्र वाग्रुरिति विशेष्यम् ।

(४) उपमानवाचि पूर्वपदात्परस्यापि गन्धशब्दस्य इकारोऽन्तादेशः स्याद् बहुव्रीहौ इत्यर्थः । सप्तम्युपमानपूर्वपदस्येति समासः ।

(५) 'सोऽपदादौ' इति सत्वम् ।

(६) 'इणः षः' इति षत्वम् ।

(७) नञः परो योऽर्थशब्दस्तदन्ताद् बहुव्रीहेः कप् स्यादित्यर्थः । अविद्यमानोऽर्थो यस्येति– अनर्थकम् ।

## इनःस्त्रियाम् ५।४।१५२

इन्नन्ताद् बहुव्रीहेः कप् । बहुदण्डिका (१) = नगरी ।
**(अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति)** बहुवाग्मिका ।

## शेषाद्विभाषा ५।४।१५४

अनुक्तसमासान्ताद् बहुव्रीहेः कब्वा । महायशाः । महयशस्कः । अनुक्तेत्यादि किम् ? व्याघ्रपाद् ।

## आपोऽन्यतरस्याम् ७।४।१५

कपि ह्रस्व. । बहुमालाकः (२) । बहुमालकः । बहुमालः ।

## न संज्ञायाम् ५।४।१५५

शेषादिति प्राप्तः कब् न । विश्वेदेवा अस्य – विश्वेदेवः ।

## ईयसश्च ५।४।१४६

ईयसन्तोत्तरपदान्न कप् । बह्वः श्रेयांसोऽस्य – बहुश्रेयान् । गोस्त्रियोरिति ह्रस्वे प्राप्ते ।
**(ईयसो बहुव्रीहेर्न (३))** बहुश्रेयसी । बहुव्रीहेः किम् ? अतिश्रेयसी (४) ।

## वन्दिते भ्रातुः ५।४।१५७

पूजार्थ भ्रातन्तान्न कप् । प्रशस्तो भ्राताऽस्य – प्रशस्त भ्राता । सुभ्राता । वन्दिते किम् ? मूर्ख भ्रातृकः । नदृतश्चेति कप् । **(सर्वनामसंख्येययोर्बहुव्रीहौ पूर्वनिपातः)** सर्वश्वेतः । द्विशुक्लः । **(संख्याया अल्पीयस्याः (५))** द्विवाः । **(द्वन्द्वेऽपि (६))** द्वादश । **(वा प्रियस्य (७))** गुडप्रियः । प्रियगुडः । **(गड्वादेः परा (८) सप्तमी)** गडुकण्ठः । क्वचिन्न । वहेगडुः ।

---

(१) बह्वो दण्डिनो यस्यामिति विग्रहः ।
(२) बह्वो माला यस्येति विग्रहः । सर्वत्र 'स्त्रियाः पुंवत्' इति पुंवत्वम् ।
(३) ईयसन्ताद्बहुव्रीहेः परस्य स्त्रीप्रत्ययस्य ह्रस्वो नेति वाच्यमित्यर्थः ।
(४) श्रेयसी मतिक्रान्त इति तत्पुरुषोऽयमिति भावः ।
(५) न्यूनाधिकवाचकसंख्याशब्दानां समासे न्यूनसंख्यायाः पूर्वप्रयोगः इति वक्तव्यमित्यर्थः ।
(६) इदं वार्तिकं इन्द्वेऽद्वन्द्वेऽपि प्रवर्तते इत्यर्थः ।
(७) बहुव्रीही पूर्वं प्रयोगो वक्तव्य इत्यर्थः ।
(८) बहुव्रीहौ योज्येति वक्तव्यमिति शेषः ।

## निष्ठा २।२।३६

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । कृतकृत्यः । (जातिकाल – सुखादिभ्यः परा निष्ठा वाच्या ) सारङ्गजग्धी । मासजाता । सुखजाता ।

## वाहिताग्न्यादिषु २।२।४७

आहिताग्निः । अग्न्याहितः । आकृतिगणोऽयम् ।

# ॥ इति बहुव्रीहिः ॥

## अभ्यासः

**प्रश्न १. 'कण्ठेकालः' इति समासप्रक्रिया साधनीयः**

उ०– कण्ठेकाल इति लौकिकविग्रहे कण्ठ ङि काल सु इत्यलौकिकविग्रहे अत एव ज्ञापकाद् व्यधिकरणपदो बहुव्रीहिरिति नियमस्य बलात्, बहुव्रीहिसमासे समासत्वेन प्रातिपदिकत्वात् सुपो लुकि प्राप्ते 'हलदन्तात्सप्तम्याः संज्ञायाम्' इति सप्तम्या अलुकि सोर्लुकि ततः 'सप्तमीविशेषणे बहुव्रीहौ' इति सप्तम्यन्तस्य पूर्वप्रयोगे एकदेशविकृतन्यायेन समुदायात् सौ रुत्वविसर्गयोः 'कण्ठेकालः' इति रूपं सम्पन्नम् ।

**प्रश्न २. 'वीरपुरुषको ग्रामः' इति कया रीत्या सिद्ध्यति ?**

उ०– वीराः पुरुषा यस्मिन् इति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे समासत्वात् प्रातिपदिकसंज्ञायां सुपो लुकि 'सप्तमी विशेषणे बहुव्रीहौ' इति वीरशब्दस्य पूर्वप्रयोगे 'शेषाद्विभाषा' इति समासान्ते कपि समुदायात्सौ रुत्वे विसर्गे च 'वीरपुरुषकः' इति सिद्ध्यति ।

**प्रश्न ३. 'चित्रगुः' इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ०– चित्रा गौर्यस्येति लौकिकविग्रहे चित्रा सु गो सु इत्यलौकिकविग्रहे बहुव्रीहिसमासे समासत्वात् प्रातिपदिकत्वे सुपो लुकि विशेषणशब्दस्य पूर्वप्रयोगे 'स्त्रियाः पुंवत्' इति पुंवद्भावे 'एकविभक्ति चापूर्वनिपाते' इति गोशब्दस्योपसर्जनत्वे गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वे समुदायात्सौ रुत्वविसर्गयोः, 'चित्रगुः' इति रूपं सिद्धम् ।

## अभ्यासार्थं प्रश्नाः

**(१) पीताम्बरः, हास्तिकम्, रसिका भार्यः, केशाकेशी, सपुत्रः, द्विमूर्धः, कुण्डोध्नी, सुगन्धिः महायशाः, कृतकृत्यः एतेषां साधनप्रक्रियां निपुणं दर्शयत ।**

(२) अधोऽङ्कितानां सूत्राणां सोदाहरणमर्थान् विलिखत

(क) अनेकमन्यपदार्थे । (ख) क्यङमानिनोश्च ।

(ग) स्वाङ्गाच्चेतः । (घ) इच् कर्मव्यतिहारे ।

(ङ) प्रकृत्याशिषि । (च) उपमानाच्च ।

(३) युवजानिः, व्यूढोरस्कः, विश्वेदेवः, बहुश्रेयसी, प्रियगुडः एषु प्रवर्तमानानि सूत्राणि वा वार्तिकानि विलिखत

(४) अधोऽङ्कितानां समस्तपदानां विग्रहवाक्यानि विलिखत

(क) उपहृतपशुः । (ख) अपुत्रः । (ग) दण्डादण्डि ।

(घ) द्रुणसः । (ङ) विग्रः । (च) शार्ङ्गधन्वा ।

(५) विग्रहवाक्यानुरूपाणि समस्तपदानि विलिखत

(क) प्रपतितः पर्णः । (ख) स्त्री प्रमाणी यस्य सः ।

(ग) दर्शनीयां स्त्रियं मन्यते । (घ) द्वौ वा त्रयो वा ।

(ङ) प्रशस्तो भ्राता यस्य सः ।

(६) अपुत्रः, दृढभक्तिः, कुक्कुटाण्डम्, सुकेशमानिनी, मुष्टीमुष्टि एतानि पदानि प्रयुज्य पृथक्, पृथक् वक्यानि रचयत।

(७) अधस्तनवाक्यानां समस्तपदानि शोध्यानि

(क) कण्ठकालस्य रुद्रस्य प्रसादात् किं न लभ्यते ।

(ख) न रोचते भृशं मह्यं कुक्कुटचण्डं सुहृद्वर !

(ग) अकेशीभार्यः पुरुषो भार्यां दृष्ट्वाऽति खिद्यति ।

(घ) स्वस्ति राज्ञे सपुत्राय इति विप्रो न्यवेदयत् ।

(ङ) पाचिकभार्यः पुरुषः स्वादन्नमत्ति सर्वदा ।

# अथ द्वन्द्वसमासः

## चार्थे द्वन्द्वः २।२।२६

अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्वेश्वरं गुरुं च भजस्वेति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः= समुच्चयः। भिक्षामट गां चानयेति अन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः। अनयोरसामर्थ्यात् समासो न। धवखदिरौ छिन्धीति मिलितानामन्वयः= इतरेतरयोगः । संज्ञापरिभाषमिति समूहः= समाहारः ।

## राजदन्तादिषु परम् २।२।३१

एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजा=राजदन्तः। धर्मादिष्वनियमः। अर्थधर्मौ । धर्मार्थौ । दम्पती । जम्पती । जायाशब्दस्य दम्भावो जम्भावश्च वा निपात्यते । आकृतिगणोऽयम् ।

## द्वन्द्वे घि २।२।३२

द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिहरौ ।

## अजाद्यदन्तम् २।२।३३

ईशकृष्णौ ।

## अल्पाच्तरम् (१) २।२।३४

शिवकेशवौ । ( **ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण** ) हेमन्त – शिशिर – वसन्ताः । कृत्तिकारोहिण्यौ समाक्षराणां किम् ? ग्रीष्मवसन्तौ (**लघ्वक्षरं (२) पूर्वम्**) । कुशकाशम् । ( **अभ्यर्हितं च** ) तापसपर्वतौ । ( **वर्णानामानुपूर्व्येण** ) । ब्राह्मण–क्षत्रिय–विट्–शूद्राः । (**भ्रातुर्ज्यायसः**) । युधिष्ठिरार्जुनौ ।

## द्वन्द्वश्च प्राणि–तूर्य–सेनाङ्गानाम् २।४।२

एषां द्वन्द्व एकवत् । पाणिपादम् (३) । मार्दङ्गिकवैणविकम् । रथिकाश्वारोहम् ।

---

(१) अल्पसंख्याच्कं पदं द्वन्द्वे पूर्वं प्रयोज्यमित्यर्थः।

(२) लघु अक्षरम्=अच् यस्य तत् द्वन्द्वे पूर्वं प्रयोज्यमित्यर्थः ।

(३) पाण्योः पादयोश्च समाहार इति विग्रहः । एवं मार्दङ्गिकवैणविकयोः समाहारः । रथिकानामश्वारोहाणां च समाहारः इति विग्रहः । समाहारे एकत्वं नपुसकत्वं च ।

**अध्ययनतोऽविप्रकृष्टाख्यानाम् २।४।५**

अध्ययनेन प्रत्यासन्ना आख्या एषां तेषां द्वन्द्व एकवत् । पदकक्रमकम् (१)

**जातिरप्राणिनाम् २।४।६**

प्राणिवर्ज्यजातिवाचिनां द्वन्द्व एकवत्। धानाशष्कुलि (२)। प्राणिनां तु विट्शूद्राः ।

**विशिष्टलिङ्गो नदीदेशोऽग्रामाः २।४।७**

ग्रामवर्जं नदीदेशवाचिनां भिन्नलिङ्गानां द्वन्द्व एकवत्। उध्यश्च इरावती च उध्येरावति। गङ्गाशोणम्। कुरवश्च कुरुक्षेत्रञ्च कुरुकुरुक्षेत्रम् ।

**क्षुद्रजन्तवः २।४।८**

एषां द्वन्द्व एकवत्। यूकालिक्षम्। आनकुलात्क्षुद्रजन्तवः ।

**एषां च विरोधः शाश्वतिकः २।४।९**

प्राग्वत् । अहिनकुलम्। गोव्याघ्रम् । काकोलूकम् इत्यादौ परत्वाद्विभाषा वृक्षेति प्राप्तं चकारेण बाध्यते ।

**शूद्राणामनिरवसितानाम् २।४।१०**

अबहिष्कृतानां शूद्राणां द्वन्द्वः प्राग्वत्। तक्षायस्कारम्। पात्राद् बहिष्कृतानां तु चण्डाल-मृतपाः ।

**गवाश्वप्रभृतीनि च २।४।११**

यथोच्चारितानि तथैव साधूनि। गवाश्वम्। दासीदासम् इत्यादि ।

**विभाषा वृक्ष-मृग-तृण-धान्य-व्यञ्जन-पशु-शकुन्यश्व-वडव-पूर्वापराधरोत्त-राणाम् २।४।१२**

वृक्षादीनां सप्तानां द्वन्द्वोऽश्ववडवेत्यादि द्वन्द्वत्रयञ्च प्राग्वद्वा। वृक्षादौ विशेषाणामेव ग्रहणम्। प्लक्षन्यग्रोधम्। प्लक्षन्यग्रोधाः रुरुपृषतम्। रुरुपृषताः। कुशकाशम्। कुशकाशाः। व्रीहियवम्। व्रीहियवाः। दधिघृतम्। दधिघृते। गोमहिषम्। गोमहिषाः। शुकबकम्। शुकबकाः। अश्ववडवम्। अश्ववडवौ। पूर्वापरम्। पूर्वापरे। अधरोत्तरम्। अधरोत्तरे । (फल-सेना

---

(१) पदान्यधीयते पदकाः, क्रमानधीयते क्रमका "क्रमादिभ्यो वुन्" तेषां समाहार इति विग्रहः।

(२) धानाश्च शष्कुल्यश्च तेषां समाहारः, जातिवाचित्वादेकत्वम्, नपुंसकत्वाद् ह्रस्व इति भावः ।

वनस्पति–मृग–शकुनि–क्षुद्रजन्तु–धान्य–तृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्) बदराणि चामलकानि च बदरामलकम्। नेह(१) बदरामलके। रथिकाश्वारोहावित्यादि ।

**न दधि–पय–आदीनि २।४।१४**

न एकवत्स्युः। दधिपयसी। इध्माबर्हिषी(२)। निपातनाद् दीर्घः। ऋक्सामे(३)। वाङ्मनसे ।

**आनङ ऋतो द्वन्द्वे ६।३।२५**

विद्यायोनिसंबन्धवाचिनां ऋदन्तानां द्वन्द्वे आनङ स्यादुत्तरपदे। होतापोतारौ। मातापितरौ। पुत्रे इत्यनुवृत्तेः–पितापुत्रौ ।

**देवताद्वन्द्वे च ६।३।२६**

इहोत्तरपदे पूर्वपदस्यानङ। मित्रावरुणौ। **(वायोः प्रयोगे प्रतिषेधः)** अग्निवायू। वाय्वग्नी ।

**ईदग्नेः सोमवरुणयोः ६।३।२७**

देवताद्वन्द्व इत्येव ।

**अग्नेः स्तुत्–स्तोम–सोमाः ८।३।८२**

अग्नेः परेषामेषां सस्य ष समासे। अग्निष्टुत्। अग्निष्टोमः। अग्नीषोमौ। अग्नीवरुणौ ।

**इद् वृद्धौ ६।३।२८**

वृद्धमित्युत्तरपदे अग्नेरिदादेशो देवताद्वन्द्वे। अग्नीमरुतौ देवते अस्य आग्निमारुतं कर्म। अग्नीवरुणौ देवते अस्य आग्निवारुणम्, देवताद्वन्द्वे चेत्युभयपदवृद्धिः।
(**विष्णौ न** (४)) आग्नावैष्णवम् ।

**दिवो द्यावा ६।३।२९**

देवताद्वन्द्वे उत्तरपदे। द्यावाभूमी ।

**मातरपितरावुदीचाम् ६।३।३२**

उदीचां किम्? मातापितरौ (५)।

---

(१) बहुवचनान्तावयवकद्वन्द्वाभावान्न 'जातिरप्राणिना' मित्येकत्वम् ।
(२) इध्मम्=समित् च बर्हिश्चेति विग्रहः। इध्मशब्दस्य निपातनाद् दीर्घः ।
(३) ऋक् च साम च, वाक् च मनश्चेति विग्रहौ। उभयत्रापि 'अचतुर' इत्यादिनाऽच् समासान्तः ।
(४) विष्णुशब्दे परे अग्नेरिकारोनेति वव्यक्तमित्यर्थः ।
(५) उदीचां मतेऽनङ। तदभावे 'आनङ ऋत' इत्यानङ।

**द्वन्द्वाच्चु–द–ष–हान्तात्समाहारे ५।४।१०६**

चवर्गान्ताद् द–ष–हान्ताच्च द्वन्द्वात् टच् समाहारे। वाक्त्वचम्। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारे किम्? प्रावृट्शरदौ।

## ॥ इति द्वन्द्वसमासः ॥

### अभ्यासः

**प्रश्न १. 'धवखदिरौ' इति सम्यक् साधयत**

उ० – धवश्च खदिरश्च 'धवखदिरौ' इत्यत्र इतरेतरयोगत्वात् 'चार्थे द्वन्द्व' इति द्वन्द्वसमासे सुपो लुकि विभक्तिकार्ये च कृते 'धवखदिरौ, इति सिद्धयति।

**प्रश्न २. 'धानाशष्कुलि' इति कथं सिद्धयति?**

उ० – धानाश्च शष्कुल्यश्च तासां समाहार इति विग्रहे 'चार्थे द्वन्द्वः' इति द्वन्द्वसमासे समासत्वात् प्रातिपदिकसंज्ञायां जसो लुकि 'जातिरप्राणिनाम्' इति एकवद्भावे ततः सौ नपुंसकत्वेन ह्रस्वे सोर्लुकि धानाशष्कुलि इति सिद्धयति।

### अभ्यासार्थं प्रश्नाः

(१) 'चार्थे द्वन्द्वः' इत्यत्र चार्थाः प्रदर्श्यन्ताम्।

(२) **हरिहरौ, पाणिपादम्, गोव्याघ्रम्, वदरामलकम्, मतापितरौ, द्यावाभूमी, वाक्त्वचम् एषु प्रयोगेषु समासकार्याणि सम्यग् दर्शयत।**

(३) **निम्नाङ्कितप्रयोगेषु एकवद्भावविधायकानि सूत्राणि विलिखित**

(क) पाणिपादम्। (ख) कुरुक्षेत्रम्। (ग) दासीदासम्।
(घ) रथिकाश्वारोहम्। (ङ) तक्षायस्कारम्।

(४) **अधोऽङ्किततानां सूत्राणां सोदाहरणमर्थान् विलिखत**

(क) क्षुद्रजन्तवः। (ख) न दधिपय आदीनि। (ग) आनङ ऋतो द्वन्द्वे। (घ) अग्ने स्तुत्स्तोमसोमाः। (ङ) इद् वृद्धौ।

(५) **अधस्तनवाक्यानां समस्तपदानि शोधनीयानि**

(क) पाण्डुनन्दनौ अर्जुनयुधिष्ठिरौ श्रीकृष्णस्य परम भक्तौ आस्ताम्।
(ख) अहो! प्रभावस्तपस्विनो यत्र गोव्याघ्रौ सहैव जलं पिबतः।
(ग) हरिप्रसादस्य पुत्रौ रामहरी इदानीं सम्यक् न पठतः।
(घ) तौ पितृपुत्रौ सदैव मन्दिरं गच्छतः।

# अथैकशेषः

(विरूपाणामपि समानार्थानाम् (१) ) वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ। कुटिलदण्डौ।

## वृद्धो यूना तल्लक्षणश्चेदेव विशेषः १।२।६५

यूनासहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात्। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ (२)। वृद्धः किम्? गर्गगार्ग्यायणौ (३)। यूना किम्? गर्गगार्ग्यौ (४)। कृत्स्नं किम्? गार्ग्यवात्स्यायनौ (५)।

## स्त्रीपुंवच्च १।२।६६

यूना सहोक्तौ वृद्धास्त्री शिष्यते तदर्थश्च पुंवत्। गार्गी च गार्ग्यायणौ च गर्गाः।

## पुमान स्त्रिया १।२।६७

स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत्। हंसी च हंसश्च हंसौ।

## भ्रातृपुत्रौ स्वसृदुहितृभ्याम् १।२।६८

भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ।

## नपुंसकमनपुसकेनैकवच्चान्यतरस्याम् १।२।६९

अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत् स्यात्तल्लक्षण (६) एव विशेषश्चेत्। शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम्, तदिदं शुक्लम्। तानीमानि शुक्लानि।

---

(१) एकार्थत्वे विरूपाणामप्येकशेषो वक्तव्य इत्यर्थः।

(२) गार्ग्यशब्दस्य गार्ग्यायणशब्दस्य च गोत्रयुवप्रत्ययमात्रकृतमेव वैरूप्यमिति गोत्रप्रत्ययान्तो गार्ग्यशब्दः शिष्यते– इति भावः।

(३) अत्र गर्गशब्दस्य गार्ग्यायणशब्दस्य च युवप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तत्वाभावान्नैकशेष इति भावः।

(४) अत्र गर्गशब्दस्य गार्ग्यशब्दस्य च गोत्रप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यते, यूना सहोक्त्या अभावादिति।

(५) अत्र गार्ग्यशब्दस्य वात्स्यायनशब्दस्य च न गोत्रयुवप्रत्ययमात्रकृतं वैरूप्यम्, प्रकृतिवैरूप्यस्य गोत्रयुवप्रत्ययमात्रकृतत्वाभावात्। अतो गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यते इति भावः।

(६) नपुंसकत्वानपुंसकत्वमात्रकृतवैरुप्यश्चेदित्यर्थः।

**पितामात्रा (१) १।२।७०**

मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ, मातापितरौ ।

**श्वशुरः श्वश्र्वा १।२।७१**

सहोक्तौ वा शिष्यते । श्वशुरौ । श्वश्रूश्वशुरौ ।

**त्यदादीनि सर्वैर्नित्यम् १।२।७२**

सर्वैः सहोक्तौ त्यदादीनि शिष्यन्ते । स च देवदत्तश्च तौ । **(त्यदादिना मिथः सहोक्तौ यत्परं तच्छिष्यते)** स च यश्च यौ । **(पूर्वशेषोऽपि दृश्यते)** इति भाष्यम् । स च यश्च तौ । **(त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि)** सा च देवदत्तश्च तौ । तच्च देवदत्ता च यज्ञदत्तश्च तानि ।

**ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री १।२।७३**

एषु सह विवक्षायां स्त्री शिष्यते । गाव इमाः (२) । ग्राम्येति किम् ? रुरव (३) इमे । पशुग्रहणं किम् ? ब्राह्मणाः (४) । सङ्घेषु किम् ? एतौ गावौ । अतरुणेषु किम् ? वत्सा इमे । **(अनेकशफेष्विति वाच्यम्)** अश्वा इमे ।

## ।। इत्येकशेषः ।।

### अभ्यासः

**प्रश्न १. पुत्रौ इत्यत्र एकशेषसमासकार्यं दर्शयत**

उ० – पुत्रश्च दुहिता च इति विग्रहे 'चार्थे द्वन्द्वः' इति समासे समासत्वात् प्रातिपदिक संज्ञायां सुपो लुकि 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इति एकशेषे अर्थात् पुत्रशब्दस्य शेषे एकदेश-विकृतन्यायेन प्रथमाया द्विवचने तौ विभक्तौ विभक्तिकार्ये च पुत्रौ इति ।

**प्रश्न २. पितरौ, मातापितारौ इति रूपद्वयं संसाधयत**

उ० – माता च पिता च इति विग्रहे 'चार्थे द्वन्द्वः' इति इतरेतरयोगे द्वन्द्वसमासे 'पितामात्रा' इति विकल्पेन एकशेषे अर्थात् पितृशब्दस्य शेषे पितृशब्दात् प्रातिपदिक संज्ञायां प्रथमाद्विवचने पितरौ इति रूपं सिद्धम् । एकशेषाभावे 'आनङ् ऋतो द्वन्द्वे' इति आनङादेशे प्रथमाद्विवचने मातापितरौ इति च सिद्धम् ।

---

(१) 'पुमान् स्त्रिया' इत्यत्र सरूपाणामित्यनुवृत्तेरप्राप्तौ वचनमिदम् विकल्पार्थञ्च ।

(२) 'पुमान् स्त्रिया' इत्येतद् बाधित्वा स्त्री शिष्यते इति भावः ।

(३) रुरुः = कृष्णाख्योमृगः । अग्राम्यपशुत्वान्न स्त्री शिष्यते ।

(४) अपशुत्वान्नस्त्री शिष्यते । ब्राह्मणी च ब्राह्मणाश्चेति विग्रहः ।

## अभ्यासार्थं प्रश्नाः

(१) गार्ग्यौ, हंसौ, श्वशुरौ, यौ, तौ एषु एकशेषसमासकार्याणि सम्यक् दर्शयत।

अधोऽङ्कितानां सूत्राणामर्थान्, उदाहरणानि च लिखत

(क) स्त्रीपुंवच्च । (ख) पुमान् स्त्रिया: । (ग) पितामात्रा ।

(घ) त्यदादीनि सर्वैर्नित्यम् (ङ) ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ।

(३) विग्रहानुसारं रूपाणि विलिखत

(क) वक्रदण्डश्च कुटिलदण्डश्च ।

(ख) भ्राता च स्वसा च ।

(ग) पुत्रश्च दुहिता च ।

(घ) तच्च देवदत्ता च यज्ञदत्तश्च ।

# अथ समासान्ताः

**ऋक्पूरब्धूः पथामानक्षे ५।४।७४**

ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः, अक्षे या धूस्तदन्तस्य न। अर्धर्चः। (**अनृच-बह्वृचा वध्येंतर्येव**(१)) नेह। अनृक्साम। बह्वृक्=सूक्तम्। विष्णुपुरम्। विमलापं=सरः।

**द्वयन्तरुपसर्गेभ्योऽपईत्** (२) **६।३।९७**

द्वीपम्(३)। अन्तरीपम्। प्रतीपम्। समीपम्। (**अवर्णान्ताद्वा**(४)) प्रेपम्। प्रापम्।

**ऊदनोर्देशे**(५) **६।३।९८**

अनूपोदेशः। राजधुरा। अक्षेतु–अक्षधूः। दृढ धू रक्षः। सखिपथः। रम्यपथो देशः।

**अच्प्रत्यन्ववपूर्वात्सामलोम्नः ५।४।७५**

प्रतिसामम्। अनुसामम्। अवसामम्। प्रतिलोमम्। अवलोमम्। (**कृष्णोदक्पाण्डुसंख्या-पूर्वाया भूमरजिष्यते**)। कृष्णभूमः। उदग्भूमः। पाण्डुभूमः। द्विभूमः। त्रिभूमः=प्रासादः। (**संख्याया नदी गोदावरीभ्यां च**) पञ्चनदम्। सप्तगोदावरम्। अजिति योगविभागा दन्यत्रापि–पद्मनाभः।

**अक्ष्णोऽदर्शनात् ५।४।७६**

अचक्षुः पर्यायादक्ष्णोऽच् स्यात्। गवामक्षीव गवाक्षः।

**अचतुर–विचतुर–सुचतुर–स्त्रीपुंस– धेन्वनडुहर्क्साम – भ्रुव –वाङ्मनसाक्षि भ्रुव दारगर्वोर्वष्ठीव-पदष्ठीव नक्तन्दिव–रात्रिन्दिवाहर्दिव–सरजस–निःश्रेयस–पुरुषायुष-द्व्यायुष – त्र्यायुषर्ग्यजुष-जातोक्षमहोक्ष-वृद्धोक्षोपशुन-गोष्ठश्वाः ५।४।७७**

एते पञ्चविंशतिरजन्ता निपात्यन्ते। आद्यास्त्रयो बहुव्रीहयः। अविद्यमानानि चत्वारि

---

(१) अविद्यमाना ऋचो यस्येति विग्रहः। अनृचः=केवलयजुरध्येता। बहव ऋचो यस्येति बह्वृचः=ऋक्शाखी।

(२) द्वि–अन्तर्–उपसर्ग–एतेभ्यः परस्याऽपशब्दस्याऽप्रत्ययान्तस्याऽकारस्य ईत्स्यादित्यर्थः। 'आदेः परस्य'।

(३) द्वयोः पार्श्वयोर्गता आपो यस्मिन्। अन्तर्गता आपो यत्र। प्रतिकूला आपो यस्मिन्। सङ्गता आपो यत्र–इति विग्रहाः।

(४) अवर्णान्तादुपसर्गात्परस्याऽपस्य (अप्रत्ययान्तस्य) ईत्वं वा वक्तव्यमित्यर्थः।

(५) अनोः परस्यापस्य ऊत्स्याद् देशे। ईत्वापवादः।

अस्य–अचतुरः। विगतानि चत्वार्यस्य–विचतुरः। सुचतुरः। (**त्र्युपाभ्यां चतुरोऽजिष्यते**) त्रिचतुराः। चतुर्णां समीपे–उपचतुराः। तत एकादश द्वन्द्वाः। स्त्रीपुंसौ। धेन्वनडुहौ। ऋक्सामे। वाङ्मनसे। अक्षिणी च भ्रुवौ च–अक्षिभ्रुवम् (१)। दाराश्च गावश्च–दारगवम्। उरू च अष्ठीवन्तौ च–ऊर्वष्ठीवम् (२)। निपातनाट्टिलोपः। पदष्ठीवम्। निपातनात्पादशब्दस्य पद्भावः। नक्तं च दिवा च–नक्तन्दिवम्। रात्रौ च दिवा च रात्रिन्दिवम्। रात्रेर्मान्तत्वं निपात्यते। अहनि च दिवा च–अहर्दिवम्। वीप्सायां द्वन्द्वो निपात्यते। अहन्यहनीत्यर्थः। सरजसमिति साकल्येऽव्ययीभावः। बहुव्रीहौ तु सरजः=पङ्कजम्। निश्चितं श्रेयो निःश्रेयसम्। तत्पुरुष एव। नेह–निःश्रेयान्पुरुषः। पुरुषस्यायुः– पुरुषायुषम्। ततो द्विगू। द्व्यायुषम्। त्र्यायुषम्। ततो द्वन्द्वः। ऋग्यजुषम्। ततस्त्रयः कर्मधारयाः। जातोक्षः। महोक्षः। वृद्धोक्षः। शुनः समीपम्–उपशुनम्। टिलोपाभावः सम्प्रसारणं च निपात्यते। गोष्ठेश्वा गोष्ठश्वः।

**ब्रह्महस्तिभ्यां वर्चसः ५।४।७८**

अच्। ब्रह्मवर्चसम्। हस्तिवर्चसम्। (**पल्यराजभ्यां (३) च**)। पल्यवर्चसम् (४)। राजवर्चसम्।

**अव-समन्धेभ्यस्तमसः (५) ५।४।७९**

अवतमसम्। संतमसम्। अन्धतमसम्।

**अन्ववतप्ताद्रहसः ५।४।८१**

अनुरहसम्। अवरहसम्। तप्तरहसम् (६)।

**प्रतेरुरसः सप्तमीस्थात् (७) ५।४।८२**

उरसीति प्रत्युरसम्।

---

(१) प्राण्यङ्गत्वादेकत्वम्।
(२) ऊरू=सक्थिनी, अष्ठीवन्तौ=जानुनी।
(३) आभ्यां परो यो वर्चश्शब्दस्तस्मादपि अजिति वक्तव्यमित्यर्थः।
(४) पलं=मांसं अर्हतीति पल्यः=मांसभोजी, तस्य वर्चः इति विग्रहः।
(५) अव–सम्–अन्धः एभ्यः परो यस्तमश्शब्दस्तस्मादच् स्यादित्यर्थः।
(६) तप्तं रह इति विग्रहः।
परेणानधिगम्यं हि यद्रहो वह्नितप्तवत्।
तप्तञ्च तद्रहश्चेति तत्तप्तरहसं विदुः॥ (पाणिनीयमत दर्पणे।)
(७) सप्तम्यर्थद्योतकात्प्रतेः परो य उरश्शब्दस्तस्मादच् इत्यर्थः।

**अनुगवमायामे ५।४।८३**

एतन्निपात्यते दीर्घत्वे । अनुगवं=यानम् । यस्य चायाम इति समासः ।

**उपसर्गादध्वनः (१)५।४।८५**

प्रगतोऽध्वानं–प्राध्वो रथः ।

**न पूजनात् ५।४।६९**

पूजनार्थात् परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा । स्वतिभ्यामेव–नेह परमराजः ।

**किमः क्षेपे ५।४।७०**

समासान्तो नेत्यर्थः । कुत्सितो राजा । किं राजा । किं सखा । किं गौः ।

**नञस्तत्पुरुषात् (२) ५।४।७१**

अराजा । तत्पुरुषात् किम् ? अधुरं शकटम् ।

**पथो विभाषा ५।४।७२**

अपथम् । अपन्थाः । तत्पुरुषादित्येव । अपथो देशः ।

## ॥ इति समासान्ताः ॥

अभ्यासः

**प्रश्न १. त्रिभूमः प्रासादः इत्यत्र समासप्रकारं दर्शयित्वा ससूत्रं समासान्तप्रत्ययो दर्श्यताम्**

उ० – त्रिभूमः प्रासादः इत्यत्र तिस्रो भूमयो यस्येति विग्रहे बहुव्रीहि समासे 'कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते' इति वार्तिकेन अच् प्रत्यये 'यस्येति च' इतीकारलोपे रूपं सिद्धम् ।

**प्रश्न २. स्त्रीपुंसौ इत्यत्र को विग्रहः, कः समासः केन सूत्रेण समासान्त प्रत्ययो भवतीति च प्रदर्श्यताम्**

उ० – स्त्रीपुंसौ इत्यत्र 'स्त्री च पुमांश्च' इति विग्रहे द्वन्द्वसमासे 'अचतुर ......' इति सूत्रेण अच्प्रत्यये रूपं सिद्धम् ।

---

(१) उपसर्गात्परो योऽध्वन् शब्दस्तस्मादच् स्यादित्यर्थः ।

(२) नञ्पूर्वपदात्तत्पुरुषात्समासान्तो नेत्यर्थः ।

## अभ्यासार्थं प्रश्नाः

(१) अन्तरीपम्, पद्मनाभः, गवाक्षः, ब्रम्हवर्चसम्, प्रोष्ठा रथः, सुराजा एषु समासान्तकार्याणि प्रदर्शयत ।

(२) 'अचतुरविचतुर—' इत्यादिसूत्रं सोदाहरणमविकलं विलिखत ।

(३) अर्धर्चः, अनुलोमम्, राजवर्चसम्, किं गौः एषु प्रवर्तमानानि विशेष सत्राणि तेषां कार्याणि च दर्शयत ।

(४) विग्रहवाक्यानि विलिखत

(क) द्वीपम् (ख) प्रापम् (ग) विचतुरः (घ) प्रत्युरसम् (ङ) किं सखा ।

(५) अधस्तनानां सूत्राणामुदाहरणानि देयानि

(क) ऊदनोर्देशे (ख) अच् प्रत्यन्ववपूर्वात्सामलोम्नः (ग) किमःक्षेपे (घ) नञस्तत्पुरुषात् (ङ) पथो विभाषा

(६) प्रतिलोमम्, अर्हादिवम्, निःश्रेयसम्, गोष्ठश्वः, अपथम् एतानि पदानि प्रयुज्य पृथक् पृथक् वाक्यानि विरचयत ।

# अथालुक्समासः

**अलुगुत्तरपदे ६।३।१**

इत्यधिकृत्य (१)।

**ओजःसहोऽम्भस्तमस (२) स्तृतीयायाः ६।३।३**

ओजसा कृतमित्यादि (३)। (**अञ्जस उपसंख्यानम् (४)**। अञ्जसाकृतम्।

**आत्मनश्च ६।३।६**

तृतीयाया अलुक्। (**पूरणे इति वक्तव्यम्**) पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः। आत्मनापञ्चमः।

**वैयाकरणाख्यायां चतुर्थ्याः ६।३।७**

आत्मन इत्येव। आत्मनेपदम्। आत्मनेभाषा।

**परस्य (५) च ६।३।८**

परस्मैपदम्। परस्मैभाषा। हलदन्तादितिङ्रलुक्, त्वचिसारः।

**गवियुधिभ्यां स्थिरः ८।३।९५**

आभ्यां स्थिरस्य सस्य षः। गविष्ठिरः। युधिष्ठिरः। अरण्येतिलकाः। अत्र संज्ञायामिति सप्तमीसमासः। (**हृद्द्युभ्यां च (६)**)। हृदिस्पृक्। दिविस्पृक्।

**मध्याद्गुरौ ६।३।११**

मध्येगुरुः। (**अन्ताच्च**) अन्तेगुरुः।

**अमूर्ध–मस्तकात् स्वाङ्गादकामे (७) ६।३।१२**

कण्ठेकालः। उरसिलोमा। अमूर्धमस्तकात्किम्? मूर्धशिखः। अकामे किम्? मुखेकामोऽस्य मुखकामः।

---

(१) नायंविधिः 'राजपुरुषः' इत्यादावतिप्रसङ्गात्। 'पञ्चम्याः स्तोकादिभ्यः' इत्याद्यारम्भसामर्थ्याच्चि। किन्तु पदद्वयमधिक्रियते।

(२) ओजस्, सहस्, अम्भस्, तमस् एभ्यः परस्यास्तृतीयाया अलुक् स्यादुत्तरपदे इत्यर्थः।

(३) 'कर्तृकरणे कृता' इति समासः।

(४) अञ्जशब्दात्तृतीयाया अलुक् उपसंख्यानमित्यर्थः।

(५) वैयाकरणाख्यायां परशब्दस्यापि चतुर्थ्या अलुगित्यर्थः।

(६) हृच्छब्दाद् दिव् शब्दाच्च सप्तम्या अलुग् वक्तव्य इत्यर्थः।

(७) मूर्धमस्तकवर्जितात् स्वाङ्गवाचकात्सप्तम्या अलुक् स्यान्नतु कामशब्दे उत्तरपदे– इत्यर्थः।

**तत्पुरुषे कृति बहुलम्(१) ६।३।१४**

स्तम्बेरमः । कर्णेजपः ।

**शय–वास–वासिष्वकालात् ६।३।१८**

वाऽलुक् । खेशयः, खशयः । ग्रामेवासः, ग्रामवासः । ग्रामेवासी, ग्रामवासी ।

**षष्ठ्या आक्रोशे ६।३।२१**

चोरस्य कुलम् । आक्रोशे किम्–? ब्राह्मणकुलम् । (वाग्दिक्पश्यद्भ्यो युक्ति–दण्ड–हरेषु) वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । (आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च (२)) । (देवानां प्रिय इति च मूर्खे) अन्यत्र देवप्रियः । (शेप–पुच्छ–लाङ्गूलेषु शुनः) । (शुनःशेपः (३) । शुनः पुच्छः । शुनोलाङ्गूलः । (दिवश्च दासे) दिवोदासः ।

**ऋतो विद्या– योनिसम्बन्धेभ्यः ६।३।२३**

होतुरन्तेवासी (४) ।

**विभाषा स्वसृ– पत्योः ६।३।२४**

ऋदन्तात्षष्ठ्यावाऽलुक् स्वसृपत्योः परयोः ।

**मातुः पितुर्भ्यामन्यतरस्याम् ८।३।८५**

स्वसुः सस्य षः समासे । मातुःष्वसा । मातुः स्वसा । पितुःष्वसा । पितुः स्वसा । लुक्पक्षेतु–

**मातृपितृभ्यां स्वसा ८।३।८४**

स्वसुः सस्य षः समासे । मातृष्वसा । पितृष्वसा । असमासे तु मातुः स्वसा । पितुः स्वसा ।

**॥ इत्यलुक्समासः ॥**

**अभ्यासः**

**प्रश्न १ 'युधिष्ठिरः' इति कथं निष्पद्यते ?**

उ० 'युधि स्थिरः' इति लौकिकविग्रहे युध् ङि स्थिर सु इत्यलौकिकविग्रहे सप्तमीयोगविभागात् समासे, समासत्वात् प्रातिपदिकसंज्ञायां सुपो लुकि प्राप्ते 'हलदन्तात् सप्तम्याः

(१) तत्पुरुषे संज्ञायां बहुलमलुक् स्यात्सप्तम्याः कृदन्ते उत्तरपदे– इत्यर्थः ।

(२) अमुष्यापत्यमामुष्यायणः, नडादित्वात्फक् । अमुष्य पुत्रस्य भावः आमुष्यपुत्रिका, मनोज्ञादित्वाद् वुञ् । एवम् आमुष्यकुलिका ।

(३) एता ऋषिविशेषाणां संज्ञा ।

(४) इद विद्यासम्बन्धवाचिनः– उदाहरणम् । योनिसंबन्धवाचिनस्तु 'पितुरन्तेवासी' इति बोध्यम् ।

संज्ञायाम्' इति ङेरलुकि सुपो लुकि उपसर्जनत्वे प्राक्प्रयोगे युधि स्थिर इति जाते 'आदेशप्रत्यययोः' इति प्राप्तस्य षत्वस्य 'सात्पदाद्योः' इति निषेधे प्राप्ते गवि युधिभ्यां स्थिरः इति सस्य षत्वे ष्टुत्वे एकदेशविकृतन्यायेन समुदायात् सौ रुत्वविसर्गयोः युधिष्ठिरः' इति रूपं सिद्धम् ।

प्रश्न २. 'खेशयः' इति कथं सिद्धयति ?

उ० 'खे शयः, इति विग्रहे सप्तमीयोगविभागात् समासे समासत्वात् प्रातिपदिकत्वे सुपो लुकि प्राप्ते 'शयवास वासिष्वकालात्' इति वैकल्पिके ङेरलुकि सोर्लुकि ततः समुदायात्सौ रुत्वविसर्गयोः 'खेशयः' इति लुकि तु 'खशयः' इति सिद्धयति ।

प्रश्न ३. 'मातुष्वसा' इति कया रीत्या सिद्धयति ?

उ० मातुः स्वसा इति लौकिके मातृ ङस् स्वसृ सु इत्यलौकिके च विग्रहे षष्ठी समासे समासत्वेन सुपो लुकि प्राप्ते विभाषा स्वसृपत्योः' इति पाक्षिके ङसोऽलुकि सोर्लुकि 'मातुः पितुर्भ्यामन्यतरस्याम्' इति सस्य षत्वे समुदायात् सौ विभक्तिकार्ये च मातुःष्वसा इति, लुकि तु 'मातृपितृभ्यां स्वसा' इति सत्वे मातुःस्वसा इति ।

अभ्यासार्थं प्रश्नाः

(१) गविष्ठिरः, हृदिस्पृक्, आत्मनेपदम्, कर्णेजपः, वाचोयुक्तिः, पश्यतोहर, दिवोदासः, होतुरन्तेवासी, पितुःष्वसा एषु अलुक्समासकार्याणि सम्यग् दर्शयत ।

(२) अधोऽङ्कितानां सूत्राणां सोदाहरणमर्थान् विलिखत

(क) परस्य च (ख) मध्याद् गुरौ (ग) तत्पुरुषे कृतिबहुलम् (घ) षष्ठ्या आक्रोशे (ङ) विभाषा स्वसृपत्योः

(३) अधोनिर्दिष्टानां वार्तिकानां प्रवृत्तिस्थलं निरूपयत

(क) अञ्जस उपसंख्यानम् (ख) परस्य च (ग) अन्ताच्च (घ) देवानां प्रिय इति मूर्खे (ङ) शेषपुच्छलाङ्गूलेषु शुनः

(४) हृदिस्पृक्, उरसिलोमा, देवप्रियः, स्तम्बेरमः चौरस्य कुलम् एतानि पदानि प्रयुज्य पृथक पृथक्, वाक्यानि रचयत ।

(५) अधो दत्तेषु वाक्येषु अलुक्समासान्त पदानि शोधनीयानि

(क) महात्मनां वचनं सत्यं हृत्स्पृक् च भवति ।

(ख) चतुरस्य वाक्युक्तिः सर्वान् मोहयति ।

(ग) पश्यद्धहरं वणिजं दृष्ट्वा को न कुध्यति ।

(घ) उरोलोमानं नरं शीतो वायुरपि भृशं न बाधते ।

(ङ) महाकविः कालिदासोऽपि विवाहपूर्वं निरक्षरो देवप्रिय आसीत् ।

# अथ समासाश्रयविधयः

### घ–रूप–कल्प–चेलड्–ब्रुव–गोत्र–मत–हतेषु ङ्योऽनेकाचो ह्रस्वः ३।४।४३

भाषितपुंस्काद्योङी तदन्तस्यानेकाचो ह्रस्वः स्यात् । घरूपकल्प प्रत्यये चेलडादिषु चोत्तरपदेषु । ब्राह्मणितरा (१) । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रेत्यादि । ब्रुवः पचाद्यचिवच्यादेशगुणयोरभावो निपात्यते । ङ्यः किम् ? दत्तातरा । भाषितपुंस्कात्किम् ? आमलकीतरा (२) । कुवलीतरा ।

### नद्याः शेषस्यान्यतरस्याम् ६।३।४४

अङ्यन्तनद्याः ङ्यन्तैकाचश्च घादिषु ह्रस्वो वा । ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा । स्त्रितरा । स्त्रीतरा । (कृन्नद्यान (३)) लक्ष्मीतरा ।

### उगितश्च ६।३।४५

उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात् । विदुषितरा (४) । ह्रस्वाभाव पक्षे पुंवत् (५) । विद्वत्तरा ।

### पादस्य पदाऽऽज्याति गोपहतेषु ६।३।५२

एषूत्तरपदेषु पादस्य पद इत्यदन्तादेशः स्यात् । पादाभ्यां अजतीति पदाजिः । पदातिः । 'अज्यतिभ्यां पादे च' इतीण्प्रत्ययः । पदगः । पदोपहतः ।

### पद् यत्यतदर्थे ६।३।५३

पादस्य पत्स्यादतदर्थे यति । पादौ विध्यन्ति पद्याः शर्कराः । विध्यत्यधनुषेति यत् । अतदर्थे किम् ? पादार्थमुदकं = पाद्यम् । पादार्घाभ्यामिति यत् ।

---

(१) 'तसिलादिषु' इति पुंवद्भावस्तु न, 'जातेश्चे' ति निषेधात् ।

(२) आमलकी कुवलीशब्दयोर्वृक्षवाचित्वे नित्यस्त्रीलिङ्गत्वाद् भाषितपुंस्कत्वाभावेन न ह्रस्व इति भावः ।

(३) कृदन्ता या नदी तस्या ह्रस्वोनेति वक्तव्यमित्यर्थः ।

(४) 'विदेः शतुर्वसुः' इति वसुप्रत्ययः, उगिदन्तत्वाद् उगितश्चे' ति ङीप्, वसोः सम्प्रसारणम् ।

(५) 'तसिलादिषु' इत्यनेन ।

**उदकस्योदः संज्ञायाम् ६।३।५७**

उत्तरपदे । उदमेघः। (उत्तरपदस्य चेति वक्तव्यम्) क्षीरोदः ।

**पेषं–वास–वाहन–धिषु–च ६।३।५८**

उदपेषं पिनष्टि । उदवासः । उदवाहनः । उदधिर्घटः ।

**एकहलादौ पूरयितव्येऽन्यतरस्याम् (१) ६।३।५९**

उदकुम्भः । उदककुम्भः। एकेति किम् ? उदकस्थाली । पूरयितव्येति किम् ? उदकपर्वतः।

**मन्थौदन–सक्तु–बिन्दु–वज्र–भार–हार–वीवध–गाहेषु च (२) ६।३।६०**

उदमन्थः । उदकमन्थः । उदौदनः । उदकौदनः ।

**इको ह्रस्वोऽङ्यो गालवस्य ६।३।६१**

इगन्तस्याङ्यन्तस्य ह्रस्वो वा उत्तरपदे । ग्रामणिपुत्रः । ग्रामणी पुत्रः । इकः किम् ? रमापतिः । अङ्यः किम् ? गौरीपतिः ।

**ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ६।१।१३**

ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात् पुत्रपत्योः परतः ।

**सम्प्रसारणस्य ६।३।१३९**

दीर्घः स्यादुत्तरपदे । कौमुदगन्ध्यायाः पुत्रः–कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः।

**इष्टकेषीकामालानां चित–तुल–भारिषु ६।३।६५**

इष्टकादीनां तदन्तानां च चितादिषु ह्रस्वः स्यात् । इष्टकचितम् । पक्वेष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारि । उत्पलमालभारि ।

**ज्योतिर्जनपद–रात्रि–नाभि–नाम–गोत्र–रूप – स्थान – वर्ण – वयो – वचन–बन्धुषु ६।३।८५**

समानस्य सः । सज्योतिः ।

---

(१) हल्त्वस्य एकैकवर्णधर्मत्वादेव सिद्धे एकग्रहणादसंयुक्तत्वं लभ्यते । पूरयितव्यं = पूरणार्हम् (कुम्भादि) । असंयुक्त हलादौ पूरयितव्यवाचके–उत्तरपदे परे उदकस्य 'उद' इत्यादेशः स्यादित्यर्थः ।

(२) उदकस्य–उदादेशोवेति शेषः ।

## चरणेब्रह्मचारिणि ६।३।८६

ब्रह्मचारिण्युत्तरपदे समानस्य सश्चरणे समानत्वेन गम्यमाने । चरणे:=शाखा ।ब्रह्म=वेद:, तदध्ययनार्थं व्रतमपि ब्रह्म, तच्चरतीति=ब्रह्मचारी । सब्रह्मचारी इत्यादि ।

## तीर्थे ये ६।३।८७

यादौ प्रत्यये विवक्षिते समानस्य स: । सतीर्थ्य: = एकगुरुक: । समानतीर्थेवासीति यत्प्रत्यय: ।

## विभाषोदरे ६।३।८८

सोदर्य: । समानोदर्य: ।

## दृग्-दृश-वतुषु ६।३।८९

सदृक् । सदृश: । (दृक्षे च) सदृक्ष: ।

## इदं किमोरीश्की ६।३।९०

दृग्दृशवतुषु । ईदृक् । ईदृश: । कीदृक् । कीदृश: । (दृक्षे च) ईदृक्ष: । कीदृक्ष: ।

## अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशी राशास्थास्थितोत्सुकोति-कारक-रागच्छेषु ६।३।९९

अन्यशब्दस्य दुगागम: स्यादाशीरादिषु परेषु । अन्यदाशी: । अन्यदाशा । अन्यदास्था । अन्यदास्थित: । अन्यदुत्सुक: । अन्यदूति: । अन्यद्राग: । अषष्ठीत्यादि किम् ? अन्यस्यान्येन वाशी: । अन्याशी । (कारके छे च नायं निषेध:) अन्यस्य कारकोऽन्यत्कारक: । अन्यस्यायमन्यदीय:।

## अर्थे विभाषा ६।३।१००

अन्यदर्थ: । अन्यार्थ: ।

## को: कत्तत्पुरुषेऽचि ६।३।१०१

अजादावुत्तरपदे । कुत्सितोऽश्व: कदश्व: कदन्नम् । तत्पुरुषे किम् ? कूष्ट्रो = राजा । (त्रौ च) कत्त्रय: ।

## रथवदयोश्च ६।३।१०२

कद्रथ: । कद्वद: ।

## तृणे च जातौ ६।३।१०३

कत्तृणम् ।

**का पथ्यक्षयोः ६।३।१०५**

कापथम् । काक्षः ।

**ईषदर्थे ६।३।१०५**

ईषज्जलं– काजलम् ।

**विभाषा पुरुषे ६।३।१०६**

कुपुरुषः । कापुरुषः ।

**कवं चोष्णे ६।३।१०७**

उष्णशब्दे उत्तरपदे कवं का च वा स्यात् । कोष्णम् । कवोष्णम् । कदुष्णम् ।

**पृषोदरादीनि यथोपदिष्टम् ६।३।१०९**

पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि। पृषत उदरं पृषोदरम्, तलोपः। वारिवाहको बलाहकः, पूर्वपदस्य वः, उत्तरपदादेश्च लत्वम् ।

**'भवेद्वर्णागमाद्धंसः (१) सिंहो वर्णविपर्ययात् ।**
**गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ॥'**

**मतौ बह्वचोऽनजिरादीनाम् ६।३।११९**

दीर्घः स्यात् । अमरावती । अनजिरादीनां किम् ? अजिरवती । बह्वचः किम् ? व्रीहिमती । संज्ञायामित्येव । नेह, वलयवती ।

**शरादीनां च ६।३।१२०**

शरावती ।

**उपसर्गस्य घञ्यमनुष्ये बहुलम् ६।३।१२२**

परीपाकः । परिपाकः । अमनुष्ये किम् ? निषादः ।

---

(१) वर्णागमादिति– हन् धातोः पचाद्यचि सगागमे, नस्य 'नश्चा पदान्तस्ये' ति अनुस्वारः, हंसः– इति रूपम् । वर्णविपर्ययात्– हिसि हिंसायामित्यतः पचाद्यचि, इदित्वान्नुम्, नश्चेत्यनुस्वारः, हकारसकारयोर्विपर्यये सिंह इति रूपम् ।

गूढ आत्मा इति विग्रहे उत्तरपदादे रकारस्य उकारे पूर्वपरयोः 'आद्गुणः' इति गुणे गूढोत्मा इति रूपम्। पृषत उदरमित्यत्र तकारलोपे, आद्गुणे पृषोदरम् इति ।

**नरे संज्ञायाम् ६।३।१२९**

विश्वानरः ।

**मित्रे चर्षौ ६।३।१३०**

विश्वामित्रः । (**शुनो दन्त–दंष्ट्रा–कर्ण–कुन्द–वराह–पुच्छ–पदेषु दीर्घो वाच्यः**) श्वादन्तः।

**प्रनिरन्तः शरेक्षु–प्लक्षाम्र–कार्ष्य–खदिर–पीयूक्षाभ्योऽसंज्ञायामपि ८।४।५**

एभ्यः परस्य वनस्य नस्य णत्वम् । प्रवणम् ।

**विभाषौषधि–वनस्पतिभ्यः ८।४।६**

दूर्वावणम्, दूर्वावनम् । शिरीषवणम्, शिरीषवनम् । (**द्व्यच् त्र्यच्भ्यामेव**) नेह, देवदारुवनम् । (**इरिकादिभ्यो न**) इरिकावनम् । गिरिकावनम् ।

**वाहनमाहितात् ८।४।८**

आरोप्य यदुह्यते तद्वाचिस्थान्निमित्ताद्वाहनस्य नस्य णत्वम् । इक्षुवाहणम् । आहितात्किम् ? इन्द्रवाहनम् ।

**पानं देशे ८।४।९**

पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णः । क्षीरं पानं येषां ते क्षीरपाणाः=उशीनराः । सुरापाणाः=प्राच्याः ।

**वा भावकरणयोः ८।४।१०**

क्षीरपानम्, क्षीरपाणम् ।

**प्रादिपदिकान्तनुम्विभक्तिषु च ८।४।११**

पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा । माषवापिणौ । व्रीहिवापाणि । माषवापेण । पक्षे माषवापिनावित्यादि ।

**कुमति च ८।४।१३**

कवर्गवत्युत्तरपदे प्राग्वत् । हरिकामिणौ । हरिकामाणि । हरिकामेण ।

**पदव्यवायेऽपि ८।४।३८**

णत्वं न । माषकुम्भवापेन । (**अतद्धित इति वक्तव्यम्**) आर्द्रगोमयेण । शुष्कगोमयेण ।

**पारस्कर प्रभृतीनि च संज्ञायाम् ६।१।१५७**

एतानि ससुट्कानि निपात्यन्ते । पारस्करः । किष्किन्धा, (**तद्बृहतोः करपत्योश्चौर देवतयोः सुट् तलोपश्च**) । तात्पूर्वं चर्त्वेन दकारोऽपि बोध्यः । तद्बृहतोर्दकारतकारौ लुप्येते करपत्योस्तु सुट् । चौरदेवतयोरिति समुदायोपाधिः । तस्करः । बृहस्पतिः (**प्रायस्य चित्तिचित्तयोः**) प्रायश्चित्तिः । प्रायश्चित्तम् । वनस्पतिरित्यादि । आकृतिगणोऽयम् ।

## ।। इति समासाश्रयविधयः ।।

# ।। इति समासप्रकरणं समाप्तम् ।।

अभ्यासः

**प्रश्न १. 'विदुषितरा' इत्यस्य साधनप्रक्रियां सम्यग् ब्रूत ?**

उ० – इयम् अनयोरतिशयेन विदुषी इति विग्रहे 'द्विवचनविभज्योपपदेतरबीयसुनौ' इति तरप्प्रत्यये प्राप्तं पुंवद्भावं प्रबाध्य 'उगितश्च' इति पाक्षिके ह्रस्वे समुदायात्सौ विभक्तिकार्ये 'विदुषितरा' इति । ह्रस्वाभावपक्षे तु "तसिलादिष्वाकृत्वसुचः" इति पुंवद्भावे 'वसुस्रंसुध्वंस्वनडुहां दः' इति दकारे चर्त्वे प्रातिपदिकत्वेन सौ विभक्तिकार्ये च विद्वत्तरा इति ।

**प्रश्न २. 'कौमुदगन्धीपुत्रः' इति कथं सिद्धयति ?**

उ० – कौमुदगन्ध्यायाः पुत्र इति विग्रहे षष्ठीतत्पुरुषसमासे समासत्वात् प्रातिपदिकत्वेन सुपो लुकि कौमुदगन्ध्या पुत्र इति स्थिते 'ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे' इति संप्रसारणे पूर्वरूपे 'संप्रसारणस्य' इति दीर्घे समुदायात्सौ रुत्वविसर्गयोः 'कौमुदगन्धीपुत्रः' इति सिद्धयति ।

**प्रश्न ३. 'इक्षुवाहणम्' इति सम्यक् निष्पादयत ?**

उ० – 'इक्षूणां वाहनम्' इति विग्रहे षष्ठी समासे समासत्वात् प्रातिपदिकत्वे सुपो लुकि 'वाहनमाहितात्' इति णत्वे समुदायात्सौ नपुंसकत्वेन सोरमि 'इक्षुवाहणम्' इति निष्पद्यते ।

अभ्यासार्थं प्रश्नाः

(१) **अधोऽङ्कितप्रयोगेषु समासाश्रयविधिं साधु दर्शयत**

बाह्मणितरा, उदकुम्भः, ग्रामणिपुत्रः, सज्योतिः, सतीर्थ्यः, कीदृशः, कदश्वः, कापुरुषः, कवोष्णम्, अमरावती, विश्वामित्रः, दुर्वाविणम्, आर्द्रगोमयेण, किष्किन्धा, बृहस्पतिः ।

(२) अधस्तनानां सूत्राणां सोदाहरणमर्थान् विलिखत

(क) नद्याः शेषस्यान्यतरस्याम् ।

(ख) इष्टकेषीकामालाना चिततूलभारिषु ।

(ग) विभाषोदरे ।

(घ) वाहनमाहितात् ।

(ङ) कुमति च ।

(३) निम्न लिखितेषु प्रयोगेषु प्रवर्तमानानि विशेष सूत्राणि विलिख्य तेषां कार्याणि च निर्दिशत

(क) ब्राह्मणिचेली ।  (ख) उदमन्थः ।  (ग) माषवापिणौ ।

(घ) अन्यदूतिः ।  (ङ) तस्करः ।

(४) निम्नाङ्कितानि पदानि प्रयुज्य पृथक्–पृथक् वाक्यानि रचयत

विद्वत्तरा, पदगः, सतीर्थ्यः, सोदर्यः, कदश्वः, कवोष्णम्, परिपाकः, पारस्करः, प्रायश्चित्तिः, वनस्पतिः ।

(५) विग्रहवाक्यानि विलिखत

(क) सब्रह्मचारी ।  (ख) इष्टकचितम् ।  (ग) काजलम् ।

(घ) बृहस्पतिः ।  (ङ) वनस्पतिः ।  (च) क्षीरपाणाः ।

(६) अधो निर्दिष्टं पद्यं समीचीनतया व्याख्यायताम्

(क) भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् ।
गुढोत्मा वर्णविकृतेर्वर्णनाशात् पृषोदरम् ॥१॥

(७) समासाश्रयदृष्ट्या नीचैर्विलिखितानि वाक्यानि संशोधनीयानि

(क) अहो ! विदुषीतराऽपि युवतिर्निर्धना अस्ति ।

(ख) श्रीकृष्णसुदामानौ समानतीर्थ्यौ सखायौ बभूवतुः ॥

(ग) श्वदन्तेषु अपि विषं भवतीति केचिद् वदन्ति ।

(घ) धिक् ! ब्राह्मणीवुवाऽपि सा सुरां निसेवते ।

(ङ) दीपावल्याः शुभावसरे कुमार्यः, आर्द्रगोमयेन अङ्गणानि द्वाराणि च लिम्पन्ति ।

# अथ तद्धितप्रकरणम्

## तद्धितेष्वपत्याधिकारः

**समर्थानां प्रथमाद्वा** (१) ४।१।८२

इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत् ।

**प्राग्दीव्यतोऽण्** ४।१।८३

तेन दीव्यतीत्यतः प्रागणधिक्रियते ।

**अश्वपत्यादिभ्यश्च** ४।१।८४

एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु (२) । अश्वपतेरपत्याद्याश्वपतम् (३) । गाणपतम् ।

**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** ४।१।८५

प्राग्दीव्यतीयेष्वर्थेषु । अणोऽपवादः। दितेरपत्यादि दैत्यः । अदितेरादित्यस्य वा **(अपत्यं पुमान्)** आदित्यः । (**यणो मयो द्वे वाच्ये**) मय इति पञ्चमी यण इति षष्ठीति पक्षे यस्य द्वित्वम् ।

**हलोयमां यमि लोपः** ८।४।३४

वा स्यात् । इत्यसति लोपे द्वित्वे च सति त्रियं रूपम् । असति लोपे द्वित्वलोपयोर्वा द्वियम् । द्वित्वाभावे लोपे च सति – एकयम् । प्राजापत्यः । (**देवाद्यञञौ**) दैव्यम् । दैवम् । (**बहिषष्टिलोपो यञ्च**) बाह्यः ।(**ईकक्** (४) **च**)

**किति च** ७।२।११८

किति तद्धिते ऽचामादेरचो वृद्धिः । बाहीकः। (**गोरजादिप्रसङ्गे यत्**) गोरपत्यादि गव्यम् ।

---

(१) समर्थानां मध्ये यः प्रथमः तस्मात् अर्थात् सूत्रे प्रथमोच्चारितशब्दबोध्यात् प्रत्ययो वास्यादिति सूत्रार्थः ।

(२) अपत्यादिषु ।

(३) तद्धितेष्वचामादेरित्यादिवृद्धिः यस्येति चे' ति इकारलोपः ।

(४) बहिष ईकक् चस्यात्प्रकृतेष्टिलोपश्चेति वक्तव्यमित्यर्थः ।

**उत्सादिभ्योऽञ् (१) ४।१।८६**

औत्सः । इत्यपत्यादिविकारान्तार्थाः प्रत्ययाः ।

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४।१।८७**

धान्यानां भवन इत्यतः प्रागर्थेष्वाभ्यामेतौ स्तः । स्त्रैणः (२) । पौंस्नः (३) ।

**तस्यापत्यम् ४।१।९२**

षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ।

**ओर्गुणः ६।४।१४६**

उवर्णान्तस्य भस्य गुणस्तद्धिते। ओरोदिति वक्तव्ये गुणोक्तिः संज्ञापूर्वको विधिरनित्य इति ज्ञापयितुम् । तेन स्वायंभुवमित्यादि सिद्धम् ।

उपगोरपत्यमौपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ।

**अपत्यं पौत्रप्रभृति गोत्रम् ४।१।१६२**

अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ।

**एको गोत्रे ४।१।९३**

गोत्रे एक एव अपत्यप्रत्ययः स्यात् । उपगोर्गोत्रापत्यम्=औपगवः (४) ।

**गर्गादिभ्यो यञ् ४।१।१०५**

गोत्रापत्ये । गर्गस्य गोत्रापत्यं गार्ग्यः । वात्स्यः ।

**यञञोश्च २।४।६४**

गोत्रे यञन्तमञन्तं च तदवयवयोरेतयोर्लुक्तत्कृते बहुत्वे न तु स्त्रियाम् । गर्गाः । वत्साः ।

---

(१) उत्स – महानस – पृथ्वी–इत्यादयः– उत्सादयः ।

(२) स्त्रिया अपत्यं पुमान्, स्त्रीषु भवः, स्त्रीणां समूहः– इति वा विग्रहः ।

(३) संयोगान्तस्येति सलोपः ।

(४) अत्र उपगु शब्द एव प्रत्ययं लभते न तु पुनः 'औपगव' शब्दः, अर्थात् गोत्रापत्येऽण एव भवति न तु तदन्तात् पुनः इञ्' ।

**गोत्रेऽलुगचि ४।१।८९**

अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक् स्यात्। गर्गाणां छात्राः '। वक्ष्यमाणो वृद्धाच्छः।

**आपत्यस्य च तद्धितेऽनाति ६।१।१५१**

हलः परस्यापत्ययकारस्य लोपस्तद्धिते न त्वाकारे। गार्गीयाः (१)। अनाति किम्? गार्ग्यायणः (२)। प्राग्दीव्यतीये किम्? गर्गेभ्यो हितम्–गर्गीयम्। अचि किम्? गर्गेभ्य आगतं–गर्गरूप्यम्।

**जीवति तु वंश्ये युवा ४।१।१६५**

वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यान्न तु गोत्रसंज्ञम्।

**गोत्राद्यून्यस्त्रियाम् ४।१।९४**

यून्यपत्ये विवक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्स्त्रियां तु न युवसंज्ञा।

**यञिञोश्च ४।१।१०१**

गोत्रे यौ यञिञौ तदन्तात् फक्।

**आयनेयीनीयियः फ–ढ–ख–छ–घां प्रत्ययादीनाम् ७।१।२**

प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय् स्युः। गर्गस्य युवापत्यं गार्ग्यायणः। दाक्षायणः।

**अत इञ् ४।१।९५**

अपत्येऽर्थे। दाक्षिः।

**बाह्वादिभ्यश्च ४।१।९६**

बाहविः (३)। औडुलोमिः (४)। औडुलोमी। **(लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः)** बाह्वादेरपवादः। उडुलोमाः। आकृतिगणोऽयम्।

---

(१) गार्ग्यशब्दाच्छप्रत्यये यञोऽलुकि न वृद्धयभावः, यकारस्य लोपे छस्य ईय्।

(२) यञन्तात् युवा पत्यऽर्थे यञिञोश्चेति फक्, फस्य आयन्, आकारपरत्वात् यकारस्य न लोपः।

(३) ओर्गुण इति गुणेऽवादेशः, आदिवृद्धिश्च।

(४) उडूनीव (=नक्षत्राणीव) लोमानि यस्य स उडुलोमा, तस्यापत्यं पुमान् इति विग्रहः। 'नस्तद्धिते' इति टिलोपः।

**अनृष्यानन्तर्ये विदादिभ्योऽञ् ४।१।१०४**

ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे। विदस्य गोत्रं–वैदः। वैदौ। विदाः (१)। पुत्रस्यापत्यं–पौत्रः। पौत्रौ। यञञोश्चेति सूत्रे प्रवराध्यायप्रसिद्धं गोत्रम्, तेनेह न। पौत्राः (२)। एवं दौहित्रादयः।

**शिवादिभ्योऽण् ४।१।११२**

अपत्ये। शैवः। गाङ्गः।

**ऋष्यन्धक–वृष्णि–कुरुभ्यश्च ४।१।११४**

ऋषिभ्यः – वासिष्ठः, वैश्वामित्रः। अन्धकेभ्यः– श्वाफल्कः। वृष्णिभ्यः– वासुदेवः। कुरुभ्यः– नाकुलः, साहदेवः।

**मातुरुत्संख्या–सं–भद्रपूर्वायाः ४।१।११५**

संख्यादिपूर्वस्य मातृशब्दस्य उदादेशः स्यादण् प्रत्ययश्च। द्वैमातुरः (३)। षाण्मातुरः। भाद्रमातुरः।

**स्त्रीभ्यो ढक् ४।१।१२०**

स्त्रीप्रत्यान्तेभ्यो ढक्। वैनतेयः।

**कन्यायाः कनीन च (४) ४।१।११६**

चादण्। कानीनो=व्यासः। कर्णश्च।

**राजश्वशुराद्यत् १।४।१३७**

(राज्ञो जातावेव)।

**ये चा भावकर्मणोः १।४।१६८**

यादौ तद्धिते अन् प्रकृत्यास्यान्न तु भावकर्मणोः। राजन्यः। श्वशुर्यः। जातावेवेति किम् ?

---

(१) बहुवचने 'यञञोश्च' इति अञ्प्रत्ययस्य लुक्।

(२) नात्र गोत्रे प्रत्ययः, इति न अञो लुक्।

(३) द्वयोर्मात्रोरपत्यं पुमान् इति विग्रहः।

(४) कन्याशब्दस्यापत्यार्थे 'कनीन' इत्यादेशो भवति, अण् प्रत्ययश्चेत्यर्थः।

**अन् ४।१।१६७**

प्रकृत्याणिपरे । राजन: ।

**क्षत्राद् घ: ४।१।१३८**

क्षत्रिय: । जातावित्येव । क्षात्रिरन्य: ।

**रेवत्यादिभ्यष्ठक् ४।१।१४६**

**ठस्येक: ७।३।५०**

अङ्गात्परस्य ठस्येकादेश: । रैवतिक: ।

**गोत्रे कुञ्जादिभ्यश्च्फञ् ४।१।९८**

**व्रातच्फञोरस्त्रियाम् ५।३।११३**

व्रातवाचिभ्यश्च्फञन्तेभ्यश्च स्वार्थे ञ्यप्रत्यय: स्यात् । कौञ्जायन्य: (१) । कौञ्जायन्यौ । बहुत्वे लुग्वक्ष्यते । ब्राध्नायन्य: ।

**नडादिभ्य: फक् ४।१।९९**

गोत्र इत्येव । नाडायन: (२) । चारायण: । अनन्तरो (३) नाडि: ।

**अश्वादिभ्य: फञ् ४।१।११०**

गोत्रे । आश्वायन: ।

**इतश्चानिञ: ४।१।१२२**

इकारान्ताद् द्व्यचोऽपत्ये ढक् नत्विञन्तात् । दौलेय: । नैधेय: । आत्रेय: । आत्रेयौ ।

**अत्रि–भृगु–कुत्स–वसिष्ठ–गोतमाङ्गिरोभ्यश्च २।४।६५**

एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् तत्कृतबहुत्वे न तु स्त्रियाम् । अत्रय: । भृगव: । कुत्सा: । वसिष्ठा: । गोतमा: । अङ्गिरस: ।

---

(१) कुञ्जशब्दात्च्फञ् प्रत्यये फस्य आयन्, आदिवृद्धि:, तत: कौञ्जायनशब्दात् ञ्यप्रत्यये कौञ्जायन्य: ।

(२) इञोऽपवादोऽयं फक् । नडस्य गोत्रापत्यं – नाडायन:। एवं चरस्य गोत्रापत्यं चारायण: ।

(३) अनन्तरापत्यस्य गोत्रत्वाभावात् फकोऽभावे 'अत इञ्' इति इञेव । नडस्यानन्तरापत्यम् (पुत्र:) नाडि: ।

## शुभ्रादिभ्यश्च ४।१।१२३

शौभ्रेयः ।

## कल्याण्यादीनामिनङ ४।१।१२६

एषामिनङादेशः स्यात् ढक् च। काल्याणिनेयः (१) । बान्धकिनेयः ।

## कुलटाया वा ४।१।१२७

इनङमात्रं विकल्प्यते ढक् तु नित्यः पूर्वेणैव। कौलटेयः । कौलटिनेयः । सतीभिक्षुक्यत्र कुलटा ।

## चटकाया ऐरक् ४।१।१२८

(चटकादिति वाच्यम्) प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति सिध्यति । चटकस्य चटकाया वा अपत्यं चाटकैरः ( स्त्रियामपत्ये लुग्वक्तव्यः ) तयोरेव स्त्र्यपत्यं=चटका ।

## गोधायाढ्रक् ४।१।१२९

गौधेरः । शुभ्रादित्वात्पक्षे ढक् । गौधेयः ।

## क्षुद्राभ्यो वा ४।१।१३१

अङ्गहीनाःशीलहीनाश्च क्षुद्रास्ताभ्यो ढ्रक् वा । पक्षे ढक्। काणेरः। काणेयः । दासेरः। दासेयः ।

## पितृष्वसुश्छण् ४।१।१३२

अणोऽपवादः। पैतृष्वस्रीयः ।

## ढकि लोपः ४।१।१३३

पितृष्वसुरन्त्यस्य लोपः स्यात् ढकि । अत एव ज्ञापकात् ढगपि । पैतृष्वसेयः ।

## मातृष्वसुश्च ४।१।१३४

पितृष्वसुर्यदुक्तं तदस्यापि स्यात् । मातृष्वस्रीयः । मातृष्वसेयः ।

---

(१) कल्याण्या अपत्यं पुमान् इति विग्रहे ईकारस्य इनङादेशे कल्याणिन् शब्दात् ढकि, एयादेशे आदिवृद्धौ—काल्याणिनेयः । एवं बन्धक्या अपत्यं बान्धकिनेयः ।

**कुलात्खः (१) ४।१।१३९**

कुलीनः। तदन्तादपि, उत्तरसूत्रे अपूर्वपदादिति लिङ्गात्। आढ्यकुलीनः।

**अपूर्वपदादन्यतरस्यां यड्ढकञौ ४।१।१४०**

कुलादित्येव। पक्षे खः। कुल्यः। कौलेयकः। कुलीनः।

**महाकुलादञ्-खञौ ४।४।१४१**

अन्यतरस्याम् इत्यनुवर्तते, पक्षे खः। माहाकुलः। माहाकुलीनः। महाकुलीनः।

**दुष्कुलाड् ढक् ४।१।१४२**

वा। पक्षे खः। दौष्कुलेयः। दुष्कुलीनः।

**स्वसुश्छः ४।१।१४३**

स्वस्रीयः।

**भ्रातुर्व्यच्च ४।१।१४४**

चाच्छः। भ्रातृव्यः। भ्रात्रीयः।

**मनोर्जाता वञ्यतौ षुक् च ४।१।१६१**

समुदायार्थो जातिः। मानुषः। मनुष्यः। (**तक्ष्णोऽणुपसंख्यानम्**)

**षपूर्वहन्-धृत-राज्ञा मणि ६।४।१३५**

एषामणि तद्धितेऽनोकारलोपः। ताक्ष्णः।

**तिकादिभ्यः फिञ् ४।१।१५४**

तैकायनिः।

**वृद्धिर्यस्याचामादिस्तद्वृद्धम् १।१।७३**

यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात्।

**उदीचां वृद्धादगोत्रात् ४।१।१५७**

आम्रगुप्तायनिः। प्राचां तु-आम्रगुप्तिः।

**प्राचामवृद्धात्फिनबहुलम् ४।१।१६०**

ग्लुचुकायनिः।

---

(१) अपत्ये इति शेषः।

## जनपदशब्दात्क्षत्रियादञ् ४।१।१६८

जनपद–क्षत्रिययोर्वाचकादञ् अपत्ये । पाञ्चालः । (१) 'क्षत्रियसमानशब्दा- (२) ज्जनपदात् तस्य राजन्यपत्यवत्' । पञ्चालानां राजा–पाञ्चालः । (**पूरोरण्** (३) पौरवः ।

## द्व्यञ्–मगध–कलिङ्ग–सूरमसादण् ४।१।१७०

द्व्यच् । आङ्गः । वाङ्गः । मागधः । (**पाण्डोर्ड्यण्**) पाण्ड्यः (४) ।

## वृद्धेत्कोशलाजादाञ् ञ्यङ (५) ४।१।१७१

वृद्धात्–आम्बष्ठ्यः । इत्–आवन्त्यः । कौशल्यः । अजादस्यापत्यं–आजाद्यः ।

## कुरुनादिभ्यो ण्यः ४।१।१७२

कौरव्यः । नैषध्यः ।

## ते तद्राजाः ४।१।१७४

अञादयस्तद्राजसंज्ञाः स्युः ।

## तद्राजस्य बहुषु तेनैवास्त्रियाम् २।४।६२

बहुष्वर्थेषु तद्राजस्य लुक् तत्कृते बहुत्वे नतु स्त्रियाम् । पञ्चाला इत्यादि ।

## कम्बोजाल्लुक् ४।१।१७५

तद्राजस्य । कम्बोजः (६), कम्बोजौ । (**कम्बोजादिभ्य इति वक्तव्यम्**) । चोलः । शकः । केरलः । यवनः ।

---

(१) पञ्चालो देशः, राजा च, जनपदवाचित्वेसति क्षत्रियवाचकत्वात्, तस्मादञ् । पञ्चालस्य (राज्ञः) अपत्यं पाञ्चालः ।

(२) क्षत्रियवाचकशब्देन समानशब्दो यो जनपदवाचकः शब्दस्तस्मात् षष्ठ्यन्ताद् राजन्यर्थेऽपत्यवत्प्रत्यया भवन्तीत्यर्थः ।

(३) पूरुशब्दस्य जनपदवाचित्वाभावात् प्राग्दीव्यतीयेऽणि सिद्धे तद्राजार्थं वचनम् । पूरोर्गोत्रापत्यं पौरवः ।

(४) पाण्डोरपत्यं, पाण्डु देशस्य राजा वा–पाण्ड्यः ।

(५) जनपद क्षत्रियो भयवाचकाद् वृद्धसंज्ञकाद् इदन्तात् कोशलाद् अजादाच्चापत्ये ञ्यङ इत्यर्थः ।

(६) जनपदशब्दादिति विहितस्य अञो लुक् । कम्बोजस्यापत्यं कम्बोजानां राजा वा कम्बोजः । एवं चोलस्यापत्यं चोलानां राजा वा चोल इत्यादि ।

## अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ गोत्रे ४।१।७८

ञ्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमम्, गोत्रे यावणिञौ विहितौ अनार्षौ तदन्तयो र्गुरुपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः 'यङश्चाप्' कुमुद गन्धेर्गोत्रापत्यं स्त्री कौमुदगन्ध्या (१)। वाराह्या। अनार्षयोः किम्? वासिष्ठी। गुरुपोत्तमयोः किम्? औपगवी। गोत्रे किम्? अहिच्छत्रे जाता आहिच्छत्री।

## ॥ इत्यपत्याधिकारः ॥

### अभ्यासः

**प्रश्न १. 'समर्थानां प्रथमाद्वा' इति सूत्रस्यार्थो लेख्यः**

उ० – समर्थानाम्, प्रथमात्, वा इति पदत्रयमधिक्रियते प्राग्दिश इति यावत्। समर्थानांमध्ये यः प्रथमस्तस्मात्सूत्रे प्रथमोच्चारितशब्दबोध्यात्प्रत्ययो वा स्यादिति सूत्रार्थः।

**प्रश्न २. दैत्यः– इति प्रयोगः प्रत्ययप्रदर्शनपूर्वकं ससूत्रं साध्यः**

उ० – दितेरपत्यं पुमानिति विग्रहे षष्ठयन्ताद् दितिशब्दात् 'प्राग्दीव्यतोऽण्' इति सामान्यतः प्राप्तमणं प्रबाध्य 'अश्वपत्यादिभ्यश्चे' ति च प्राप्तमणं प्रबाध्य 'दित्यदित्यादित्य पत्युत्तरपदाण्ण्यः' इति ण्यप्रत्यये सुपो लुकि 'तद्धितेष्वचामादे'रित्यादिवृद्धौ 'यस्ये'ति चे' तीकारलोपे दैत्यशब्दात्प्रातिपदिकसंज्ञायां सौ रूपं साधु।

**प्रश्न ३. गार्ग्यायणः– इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ० – गर्गस्य युवापत्यमिति विग्रहे षष्ठयन्ताद् गर्गशब्दात् 'गर्गादिभ्योयञ्' इति यञ् प्रत्यये निष्पन्नाद् गार्ग्य शब्दात् 'यञिञोश्चे' ति फक्प्रत्यये 'आयनेयीनी यियः. . .' इति फस्यायनादेशे गार्ग्यायण इति सिद्धम्।

**प्रश्न ४. 'पाण्डयः' इति प्रयोगः कथं सिध्यति?**

उ० – पाण्डोरपत्यं पुमान्, पाण्डूनां राजा वा–इति विग्रहे षष्ठयन्त पाण्डुशब्दात् 'पाण्डोडर्यण्' इति वार्तिकेन डयण् प्रत्यये डकारणकारयोरित्संज्ञायां लोपे च, आदिवृद्धौ टिलोपे पाण्डय इति रूपं सिध्यति।

---

(१) कुमुदगन्ध इव गन्धो यस्येति विग्रहे 'सप्तम्युपमान पूर्वपदस्य बहुव्रीहिर्वाच्य उत्तरपद-लोपश्चेति' बहुव्रीहिः, पूर्वखण्डे उत्तरपशदस्य गन्धब्दस्य लोपश्च। 'उपमानाच्च' इति इत्वम्। कुमुदगन्धेरपत्यं स्त्रीति विग्रहेऽण् 'यस्ये'ति च' इतीकारलोपे आदिवृद्धौ कौमुदगन्धशब्दः। तत्र धकारादणोऽकार उत्तमः, तत्समीपवर्ती गुरुः गकारादकारः 'संयोगे गुरुः' इत्युक्तेः। एवं च गुरुपोत्तमं प्रातिपदिकं कौमुदगन्धे त्यणन्तम्, तदवयवस्याणः ष्यङादेशे स्त्रियां 'यङश्चाप्' इति चाप् प्रत्यये कौमुदगन्ध्या।

## अभ्यासार्थं प्रश्नाः

(१) 'एको गोत्रे' इति सूत्रस्यार्थं विलिख्योदाहरणं देयम् ।

(२) दैव्यम्, दैवम्– इति प्रयोगौ सुसाध्यौ

(३) 'ईकक् च' इति वार्तिकस्योदाहरणं प्रदर्श्य तस्य साधुत्वं च प्रदर्श्यताम् ।

(४) आपत्यस्य च तद्धितेऽनाति' इति सूत्रस्य कोऽर्थः ?

(५) जीवति तु वंश्ये युवा' इति सूत्रस्याभिप्रायो दर्शनीयः ।

(६) गाङ्गः, गाङ्गेयः – इति प्रयोगौ ससूत्रं साध्यौ ।

(७) **अधस्तनप्रयोगाः ससूत्रप्रदर्शनं साध्याः**

षाण्मातुरः, क्षत्रियः, कौञ्जायन्यः, पैतृष्वस्रीयः, पाञ्चालः ।

(८) राजन्यः– इत्यस्य सिद्धिप्रकारो दर्शनीयः ।

(९) अजातौ क्षत्रशब्दादपत्येऽर्थे कः प्रत्ययः ?

(१०) 'गोत्रे कुञ्जादिभ्यश्च्फञ्' 'व्रातच्फञोरस्त्रियाम्' इति सूत्रयोरभिप्रायप्रदर्शनपूर्वक-मुदाहरणं प्रस्तूयताम् ।

(११) मानुषः, मनुष्यः– इति प्रयोगौ साध्यौ ।

(१२) अत्रेर्गोत्रापत्यानि पुमांसः इति विग्रहे केन सूत्रेण कीदृशं रूपं सम्पद्यते लिख्यताम् ।

(१३) चटकस्य चटकाया वा पुमपत्ये स्त्र्यपत्य च कीदृशं रूपं सम्पद्यते लिख्यताम् ।

(१४) 'क्षुद्राभ्यो वा' इति सूत्रस्यार्थः प्रदर्श्यताम् ।

(१५) 'कम्बोजादिभ्य इति वक्तव्यम् ' इति वार्तिकस्यार्थः प्रदर्शनीयः ।

# अथ रक्ताद्यर्थकाः

**तेन (१) रक्तं रागात् ४।२।१**

कषायेण रक्तं वस्त्रं –काषायम्। माञ्जिष्ठम् । रागात्(२) किम् ? देवदत्तेन रक्तं वस्त्रम्

**लाक्षा– रोचनाठ्ठक् ४।२।२**

लाक्षिकः । रौचनिकः । (**शकलकर्दमाभ्यामुपसंख्यानम्**) शाकलिकः (३) । कार्दमिकः । (**नील्या अन्**) नील्या रक्तं वस्त्रं –नीलम्। (**पीतात्कन्**) पीतकम्। (**हरिद्रामहारजनाभ्यामञ्**) हारिद्रम् । माहारजनम्(४) ।

**नक्षत्रेण युक्तः कालः (५) ४।२।३**

**तिष्यपुष्ययोर्नक्षत्राणि यलोपः ४।२।३**

पुष्येण युक्तं पौषमहः ।

**लुबविशेषे ४।२।४**

पूर्वेण विहितस्य लुप्, षष्टिदण्डात्मकस्य कालस्यावान्तर विशषश्चेन्न गम्यते। अद्य पुष्यः ।

**दृष्टं साम ४।२।७**

तेनेत्येव । वसिष्ठेन दृष्टं – वासिष्ठं साम ।

**वामदेवाड्ड्यड्ड्यौ ४।२।९**

वामदेवेन दृष्टं–वामदेव्यम् ।

**परिवृतो रथः (६) ४।२।१०**

वस्त्रेण परिवृतो– वास्त्रो रथः ।

---

(१) तेन नाम तृतीयान्तात् रागवाचकात् शब्दात् रक्तमित्यस्मिन्नर्थे अण् स्यादित्यर्थः । एवं सर्वत्रैवं विधेषु स्थलेषु – अर्थाः कल्पनीयाः ।

(२) रागः रक्त–पीत– कषायादिवर्ण इत्यर्थः ।

(३) शकलं रागद्रव्य-विशेषः। शकलेन रक्तः पटः–शाकलिकः। एवं कर्दमेन रक्तः पटः–कार्दमिकः।

(४) महारजनम् कुसुम्भम् ।

(५) नक्षत्रेण युक्तः काल इत्यर्थे नक्षत्रवाचकात् शब्दात् प्राग्दीव्यतीयाः प्रत्यया यथायथं स्युरित्यर्थः ।

(६) अस्मिन्नर्थेऽण् स्यादित्यर्थः ।

**तत्रोद्धृतममत्रेभ्यः (१) ४।२।१४**

शरावे उद्धृतः– शाराव ओदनः ।

**संस्कृतं भक्षाः ४।२।१६**

सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्तेस्युः। भ्राष्ट्रेषु संस्कृता–भ्राष्ट्रा भक्षाः ।

**शूलोखाद्यत् ४।२।१७**

अणोऽपवादः । शूले संस्कृतं–शूल्यं मांसम् । उख्यम् (२) ।

**दध्नष्ठक् ४।२।१८**

दध्नि संस्कृतं–दाधिकम् ।

**सास्मिन्पौर्णमासीति ४।२।२१**

इति शब्दात्संज्ञायामिति लभ्यते। पौषी पौर्णमासी अस्मिन्पौषो मासः ।

**साऽस्य देवता ४।२।२४**

इन्द्रो देवताऽस्यैन्द्रं हविः । पाशुपतम् । बार्हस्पतम् । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मन्त्रस्तुत्या च । ऐन्द्रो मन्त्रः ।

**कस्येत् ४।२।२५**

कशब्दस्य ईकारादेशः स्यात्प्रत्ययसंनियोगेन । यस्येति लोपात्परत्वादादिवृद्धिः। को ब्रह्मा देवताऽस्य–कायं हविः । श्रीर्देवताऽस्य–श्रायम् ।

**शुक्राद् घन् ४।२।२६**

शुक्रियम् ।

**सोमाट्टयण् ४।२।३०**

सौम्यम् ।

**वाय्वृतुपित्रुषसो यत् ४।२।३१**

वायव्यम् । ऋतव्यम् ।

**रीङ् ऋतः ७।४।२७**

अकृद्यकारेऽसार्वधातुक–यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः । 'येस्यति च' । पित्र्यम् । उषस्यम् ।

**द्यावापृथिवी–शुनासीर–मरुत्वदग्नीषोम–वास्तोष्पति गृहमेधाच्छ च ४।२।३२**

---

(१) पात्रवाचकशब्देभ्यः तत्रोद्धृत मित्यर्थेऽण् स्यादित्यर्थः ।

(२) उखा=पात्रविशेषः तत्र संस्कृतं–उख्यम् ।

चाद्यत् । द्यावापृथिवीयम् । शुनासीरीयम्, शुनाशीर्यम् ।

**महाराज-प्रोष्ठपदाट्ठञ् ४।२।३५**

माहाराजिकम् । प्रौष्ठपदिकम् ।

**देवताद्वन्द्वे च ७।३।२१**

अत्र पूर्वोत्तरपदयोराद्यचो वृद्धिर्ञिति णिति किति च । आग्निमारुतम् ।

**नेन्द्रस्य परस्य ७।३।२२**

सौमेन्द्रः । परस्य किम् ? ऐन्द्राग्नः ।

**दीर्घाच्च वरुणस्य ७।३।२३**

न वृद्धिः । ऐन्द्रावरुणम् । दीर्घात्किम् ? अग्निवारुणी मनड्वाहीमालभेत ।

**पितृव्य-मातुल-मातामह-पितामहाः ४।२।३६**

एते निपात्यन्ते । पितुर्भ्राता– पितृव्यः । मातुर्भ्राता– मातुलः । मातुः पिता–मातामहः । पितुः पिता– पितामहः ।

**तस्य समूहः ४।२।३७**

काकानां समूहः– काकम् । बकानां समूहः– बाकम् ।

**भिक्षादिभ्योऽण् ४।२।३८**

भैक्षम् । गर्भिणीनां समूहो– गार्भिणम् । इह भस्याढे इति पुंवद्भावे कृते–

**इनण्यनपत्ये ६।४।१६४**

अनपत्यार्थेऽणि इन्प्रकृत्या । तेन नस्तद्धिते इति टिलोपो न । युवतीनां समूहो– यौवतम् (१)।

**गोत्रोक्षोष्ट्रोरभ्र-राज-राजन्य-राजपुत्र-वत्स-मनुष्याजाद्वुञ् ४।२।३९**

ग्लुचुकायनीनां समूहो–ग्लौचुकायनम् (२) । औक्षकमित्यादि । आपत्यस्यचेति यलोपे प्राप्ते (प्रकृत्या (३) अके राजन्य मनुष्य युवानः) राजन्यकम्। मानुष्यकम् (वृद्धाच्चेति वक्तव्यम्)। वार्द्धकम्।

---

(१) 'यूनस्ति' इति तिप्रत्ययान्तात् युवतिशब्दात् समूहेऽर्थेऽण्प्रत्यये पुंवद्भावे च 'अन्' इति प्रकृतिभावे 'यौवनम्' इति सिध्यति । शत्रन्तादुगितश्चेतिङीपि अनुदात्तादेर्युवतीति दीर्घान्तात समूहेऽञितु 'यौवतम्' इति सिध्यति ।

(२) ग्लुचुकशब्दादपत्ये प्राचामवृद्धादिति फिन्, ततः 'इतो मनुष्यजातेः' इति स्त्रियां ङीष्, ततः समूहे वुञ्, 'युवोरनाकौ' इत्यकादेशः आदिवृद्धिः, यस्येति चेतीकारलोपः।

(३) राजन्य–मनुष्ययुवन् शब्दा अके परतः प्रकृत्या =प्रकृति भावेन भवन्तीत्यर्थः तेन राजन्यमनुष्ययोर्यलोपो न, युवन् शब्दस्य टिलोपश्च नेति भावः ।

**केदाराद्यञ्च ४।२।४०**

चाद्वुञ् । कैदार्यम् । कैदारकम् (**गणिकाया यञ् वक्तव्यः**) गाणिक्यम् ।

**ठञ् कवचिनश्च ४।२।४१**

चात्केदारादपि । कवचिनां **समूहः**– कावचिकम् । कैदारिकम् ।

**ग्राम–जनबन्धुभ्यस्तल् ४।२।४३**

ग्रामता । जनता । बन्धुता । तलन्तं स्त्रियाम् । (**गजसहायाभ्यां चेति वक्तव्यम्**) गजता । सहायता । (**अन्ह खः क्रतौ**) अहीनः क्रतुः ।

**अचित्तहस्तिधेनोष्ठक् ४।२।४७**

**इसुसुक्तान्तात्कः ७।२।५१**

इस् उस् उक् त एतदन्तात्परस्य ठस्य कः । साक्तुकम् । हास्तिकम् । धैनुकम् ।

**केशाश्वाभ्यां यञ्छावन्यतरस्याम् ४।२।४८**

पक्षे ठगणौ । कैश्यम् , कैशिकम् । अश्वीयम्, आश्वम् ।

**पाशादिभ्यो यः ४।२।४६**

पाश्या । तृण्या धूम्या । वन्या । वात्या ।

**खलगोरथात् ४।२।५०**

खल्या । गव्या । रथ्या ।

**इनित्रकटयचश्च ४।२।५१**

खलादिभ्यः क्रमात्स्युः । खलिनी । गोत्रा । रथकटया । (**खलादिभ्य इनिर्वक्तव्यः**) डाकिनी । कुटुम्बिनी । आकृतिगणोऽयम् ।

**तदस्यां प्रहरणमिति क्रीडायां णः ४।२।५७**

दण्डः प्रहरणमस्यां क्रीडायां–दाण्डा । मौष्टा ।

**घञः सास्यां क्रियेति ञः ४।२।५८**

घञन्तात् क्रियावाचिनः प्रथमान्तादस्यामित्यर्थे स्त्रीलिङ्गे ञप्रत्ययः ।

**श्येनतिलस्य पाते ञे ६।३।७१**

अनयोर्मुम् स्यात् ञप्रत्यये परे पातशब्दे उत्तरपदे । श्यैनम्पाता मृगया । तैलम्पाता स्वधा। श्येनतिलस्य किम् ? दण्डपातोऽस्यां–दाण्डपाता तिथिः ।

**तदधीते तद्वेद ४।२।५९**

**नय्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ७।३।३**

पदान्ताभ्यां यकारवकाराभ्यां परस्याचो न वृद्धिः, किन्तु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः। व्याकरणमधीते वेत्ति वा–वैयाकरणः।

**क्रमादिभ्यो(१) वुन् ४।२।६१**

क्रमकः। पदकः। शिक्षकः। मीमांसकः।

**क्रतूक्थादि–सूत्रान्ताट् ठक् ४।२।६०**

ऋतुविशेषवाचिनामेव ग्रहणम्। तेभ्यो मुख्यार्थेभ्यो वेदितरि, तत्प्रतिपादक ग्रन्थपरेभ्यस्त्वध्येतरि। आग्निष्टोमिकः। वाजपेयिकः। उक्थं सामविशेषः तल्लक्षणपरो ग्रन्थविशेषो लक्षणयोक्थम्। तदधीते वेद वा औक्थिकः। (**मुख्यार्थात्तूक्थशब्दाठगणौ नेष्येते**) नैयायिकः। वार्तिकः। लौकायतिकः (२)। (**सूत्रान्तात्तु अकल्पादेरेवेष्यते**)। संग्रहसूत्रिकः। अकल्पादेः किम्? काल्पसूत्रः। (**विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्**)। वायसविद्यिकः। गौलक्षणिकः। पाराशरकल्पिकः। (**अङ्ग–क्षत्र–धर्मात् त्रिपूर्वाद् विद्यान्तान्नेति वक्तव्यम्**)। आङ्गविद्यः। क्षात्रविद्यः। धार्मविद्यः। त्रिविधा विद्या त्रिविद्या तामधीते वेत्ति वा त्रैविद्यः।

## ॥ इति रक्ताद्यर्थकाः ॥

### अभ्यासः

**प्रश्न १ हरिद्रया रक्तं वस्त्रमिति विग्रहे कीदृशं रूपं सम्पद्यते साध्यताम्?**

उ० – हरिद्रया रक्तं वस्त्रमिति विग्रहे तृतीयान्तहरिद्राशब्दात् 'तेन रक्तं रागादि'ति प्राप्तमणं बाधित्वा "हरिद्रा–महारजनाभ्यामञ्" इति वार्तिकेन अञ् प्रत्यये सुपोलुकि आकारलोपे नपुंसकत्वे हारिद्रमिति सिध्यति।

**प्रश्न २. दाधिकमिति प्रयोगः साध्यताम्**

उ० – दध्नि संस्कृतमिति विग्रहे सप्तम्यन्तदधिशब्दात् 'दध्नष्ठक्' इति ठकि ठस्येकादेशे 'किति चे'त्यादिवृद्धौ नपुंसकत्वे रूपं साधु।

**प्रश्न ३. सोमो देवताऽस्येति विग्रहे केन सूत्रेण कीदृशं रूपं सम्पद्यते? लिख्यताम्**

उ० – सोमो देवताऽस्येति विग्रहे 'सोमाट्ट्यण्' इति ट्यण् प्रत्यये आदिवृद्धौ क्लीबत्वे सौम्यमिति रूपं सम्पद्यते।

---

(१) तदधीते तद्वेदेत्यर्थे क्रमादिभ्यो वुन् प्रत्ययः स्यादित्यर्थः।

(२) लोके आयतं=विस्तीर्णमिव यत्प्रसिद्धं प्रत्यक्षप्रमाणं तद् लोकायतम्, तत्प्रतिपादकं चार्वाकशास्त्रमपि (लक्षणया) लोकायतम्, तदधीते वेद वा लौकायतिकः।

**प्रश्न ४. वात्या–इत्यत्र केन सूत्रेण कस्मिन्नर्थे कः प्रत्ययो भवतीति प्रदर्श्यताम्**

उ० – वात्या–इत्यत्र वातानां समूह इति विग्रहे 'पाशादिभ्यो यः' इति समूहेऽर्थे य प्रत्यये स्त्रीत्वे टापि रूपं साधु ।

**प्रश्न ५. मीमांसकः इति प्रयोगः कथं सिध्यति ?**

उ० – मीमांसामधीते वेत्तिवेति विग्रहे मीमांसाशब्दात् 'क्रमादिभ्यो वुन्' इति वुन् प्रत्यये 'वु' इत्यस्य अकादेशे "यस्येति च" इति आकार लोपे पुंस्त्वे मीमांसक इति रूपं सिध्यति ।

## अभ्यासार्थं प्रश्नाः

(१) 'तेन रक्तं रागात्' इति सूत्रस्यार्थो लेख्यः ।

(२) 'पौषमहः' इत्यत्र "पौषमिति" साध्यताम् ।

(३) अधस्तनसूत्राणामर्थो लेख्यः

दृष्टं साम, तत्रोद्धृतममत्रेभ्यः, देवताद्वन्द्वे च ।

(४) पित्र्यमिति प्रयोगः साध्यताम् ।

(५) गर्भिणीनां समूह इति विग्रहे सम्पद्यमानं रूपं साध्यम् ।

(६) धैनुकमिति प्रयोगः सविग्रहं निष्पाद्यताम् ।

(७) 'आग्निमारुतमि'त्यत्र केन सूत्रेण कः प्रत्ययो भवतीति प्रदर्श्यताम् .

# अथ चातुरर्थिकाः

**तदस्मिन्नस्तीति देशे तन्नाम्नि (१) ४।२।६७**

उदुम्बराः सन्त्यस्मिन्देशे–औदुम्बरो देशः(२) ।

**तेन निर्वृत्तम्(३) ४।२।६८**

कुशाम्बेन निर्वृत्ता–कौशाम्बी नगरी(४) ।

**तस्य निवासः (५) ४।२।६९**

शिबीनां निवासो देशः– शैबः (६) ।

**अदूरभवश्च(७) ४।२।७०**

विदिशाया अदूर भवं–वैदिशम् ।

**वुञ्-छण्-क-ठजिल-सेनि-र-ढञ्-ण्य-य-फक्–फिञिञ्य-कक्–ठकोऽरीहण-कृशाश्वर्य-कुमुद-काश-तृण-प्रेक्षाश्म-सखि-संकाश–बल–पक्ष–कर्ण–सुतंगम–प्रगदिन्-वराह– कुमुदादिभ्यः ४।२।८०**

सप्तदशभ्यः सप्तदश क्रमात्स्युश्चातुरर्थ्याम्(८) । अरीहणादिभ्यो वुञ्–अरीहणेन निवृत्तमारीहणकम् । कृशाश्वादिभ्यश्छण्–कार्शाश्वीयः । ऋश्यादिभ्यः कः–ऋश्यकम् ।

---

(१) तदस्मिन्नस्तीत्यर्थे प्रथमान्तादणादयः प्रत्ययाः स्युः, प्रत्ययान्तेन तन्नामके देशे गम्ये इति सूत्रार्थः ।

(२) अण्, आदिवृद्धिः ।

(३) तृतीयान्ताद् निर्वृत्तमित्यर्थेऽणादयः स्युरित्यर्थः ।

(४) कुशाम्बो नाम कश्चिद्राजा तेन निर्वृत्ता=निर्मिता ।

(५) तस्य निवास इत्यर्थे षष्ठ्यन्तादणादयः स्युः तन्नाम्नि देशे गम्ये इत्यर्थः ।

(६) शिबयः क्षत्रिय विशेषाः ।

(७) तस्येति तन्नाम्नि देशे इति चानुवर्तते । तस्य अदूर भव इत्यर्थे षष्ठ्यन्तादणादयः स्युस्तन्नाम्नि देशे इत्यर्थः ।

(८) चतुर्णाम् अर्थानां समाहारः–चतुरर्थी तस्यामित्यर्थः । 'तदस्मिन्नस्ति देशे तेन निर्वृत्तम्' 'तस्य निवासः' 'अदूर भवश्च' इति चतुर्ष्वर्थेषु प्रथमोच्चारितात्तत्तद् विभक्त्यन्ताद् यथायोगं वुञादयः प्रत्ययाः स्युरिति समस्तसूत्रार्थः ।

कुमुदादिभ्यष्ठच्–कुमुदिकम् । काशादिभ्य इलः–काशिलः । तृणादिभ्यः सः–तृणसम् । प्रेक्षादिभ्य इनिः–प्रेक्षी । अश्मादिभ्योरः– अश्मरः । सख्यादिभ्यो ढञ्–साखेयम् । संकाशादिभ्यो ण्यः–सांकाश्यम् । बलादिभ्यो यः–बल्यम् । पक्षादिभ्यः फक्–पाक्षायणः । पथः पन्थ च । पान्थायनः । कर्णादिभ्यः फिञ्–कार्णायनिः । सुतंगमादिभ्य इञ्–सौतंगमिः । प्रगदिनादिभ्यो ञः–प्रागद्यः । वराहादिभ्यः कक्–वाराहकः । कुमुदादिभ्यष्ठक्–कौमुदिकः ।

## जनपदे लुप् ४।२।८१

जनपदे वाच्ये चातुरर्थिकस्य लुप् ।

## लुपि युक्तवद्व्यक्तिवचने १।२।५१

लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः– पञ्चालाः । कुरवः । अङ्गाः । कलिङ्गाः ।

## वरणादिभ्यश्च ४।२।८२

अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं वरणाः ।

## शर्कराया वा ४।२।८३

अस्माच्चातुरर्थिकस्य लुप्स्याद्वा ।

## ठक्छौ च ४।२।८४

शर्कराया एतौ स्तः । कुमुदादौ वराहादौ च पाठसामर्थ्यात्पक्षे ठच् ककौ । वाग्रहण-सामर्थ्यात्पक्षे औत्सर्गिकोऽण्, तस्य लुब्विकल्पः । षड्रूपाणि । शर्करा । (१) शार्करिकम् । शार्करम् । शर्करीयम् । शर्करिकम् । शार्करकम् ।

## नद्यां मतुप् ४।२।८५

चातुरर्थिकः । इक्षुमती ।

## कुमुद नड–वेतसेभ्यो ड्मतुप् ४।२।८७

## झयः ८।२।१०

मतोर्मस्य वः । कुमुद्वान् । नड्वान् ।

---

(१) अणो लुपि युक्तवद्भावे– शर्करा । अणि -शार्करम् । ठकि शार्करिकम् । छे– शर्करीयम् । ठचि–शर्करिकम् । ककि–शार्करकम् । सर्वत्र शर्कराः सन्त्यस्मिन्निति–शर्कराभिर्निवृ॑त्तमिति वा विग्रहः ।

**मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८।२।९**

मवर्णावर्णान्तान्मवर्णावर्णोपधायाश्च यवादिवर्जितात्परस्य मतोर्मस्य वः । वेतस्वान् ।

**नडशादात् ड्वलच् ४।२।८८**

नड्वलः । शाद्वलः ।

**शिखाया वलच् ४।२।८९**

शिखावलः ।

**उत्करादिभ्यश्छः ४।२।९०**

उत्करीयः ।

**नडादीनां कुक् च ४।२।९१**

नडकीयम् । (**क्रुञ्चा ह्रस्वत्वं च**) क्रुञ्चकीयः । (**तक्षन्नलोपश्च**) तक्षकीयः ।

## ॥ इति चातुरर्थिकाः ॥

### अभ्यासः

**प्रश्न १. कौशाम्बी नगरी – इत्यत्र सविग्रहं साधुत्व प्रकारो वर्शनीयः**

उ०– कुशाम्बेन निर्वृत्ता नगरी इति विग्रहे 'तेन निर्वृत्तमि'ति सूत्रेणाण्प्रत्यये सुपोलुकि भत्वेऽकारलोपे आदिवृद्धौ कौशाम्ब इति जाते स्त्रीत्वबोधके ङीपि रूपं साधु ।

**प्रश्न २. वाराहकः– इति प्रयोगः कथं सिध्यति ?**

उ०– वराहेण निर्वृत्त इति विग्रहे तृतीयान्तवराहशब्दात् 'वुञ् –छण्....' इत्यादि सूत्रेण कक् प्रययेऽनुबन्धलोपे 'किति चे' त्यादिवृद्धौ भत्वेऽकारलोपे ततः स्वादिकार्ये 'वाराहक.' इति रूपं निष्पन्नम् ।

**प्रश्न ३. वेतस्वान्–इति प्रयोगः साधु साधनीयः**

उ०– वेतसाः सन्ति अस्मिन्निति विग्रहे वेतसशब्दात् 'कुमुद–नड–वेतसेभ्यो ड्मतुप्' इति ड्मतुप्यनुबन्धलोपे डित्त्वाट् टिलोपे 'मादुपधायाश्च....' इति मस्य वत्वे स्वादिकार्ये रूपं साधु ।

### अभ्यासार्थं प्रश्नाः

(१) वुञ्–छण्... इत्यादि सूत्रं समग्रं लिख्यताम् ।
(२) 'तदस्मिन्नस्तीति देशे तन्नाम्नि' इति सूत्रस्यार्थं सोदाहरणं लिखत ।
(३) 'कौमुदिकः' इति प्रयोगः सुसाध्यः ।
(४) इक्षुमतीति प्रयोगः कथं सिध्यति ?
(५) 'नडकीयम्' इत्यत्र विशेष कार्यं दर्शयत ।

# अथ शैषिकाः

## शेषे ४।२।९२

अपत्यादिचातुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः । चक्षुषा गृह्यते – चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः (१) पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्णः– औलूखलो यावकः । अश्वै रुह्यते–आश्वो रथः। चतुर्भि रुह्यते–चातुरं शकटम् । चतुर्दश्यां दृश्यते- चातुर्दशं रक्षः । तस्य विकार इत्यतः प्राक् शेषाधिकारः ।

## राष्ट्रावारपाराद् घ–खौ ४।२।९३

आभ्यां घ खौ स्तः । राष्ट्रे जातादि–राष्ट्रियः । अवारपारीणः । (अवारपाराद्विगृही ता दपि (२) विपरीताच्चेति वक्तव्यम्) अवारीणः । पारीणः । पारावारीणः । इह प्रकृतिविशेषाद् घादय ष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते । तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते ।

## ग्रामाद्य–खञौ ४।२।९४

ग्राम्यः । ग्रामीणः ।

## नद्यादिभ्यो ढक् ४।२।९७

नादेयम् । माहेयम् । वाराणसेयम् ।

## दक्षिणा–पश्चात्–पुरसस्त्यक् ४।२।९८

दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

## द्यु–प्रागपागुदक्–प्रतीचो यत् ४।२।१०१

दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् ।

## अव्ययात्त्यप् ४।२।१०४

(अमेह – क्व – तसि – त्रेभ्य एव) अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । (त्यब्नेर्ध्रुव इति वाच्यम्) नित्यः । (निसो गते)

---

(१) उपनिषद्भिः प्रतिपादितः– औपनिषदः, अण् आदिवृद्धिः ।

(२) विगृहीतात् = पृथग्भूतात्, अवारशब्दात् पारशब्दाच्चापि पृथक् पृथक् प्रत्यय इत्यर्थः । विपरीतात् = पारावारशब्दादपीत्यर्थः ।

**ह्रस्वात्तादौ तद्धिते ८।३।१०१**

ह्रस्वादिण: सस्य ष स्तादौ तद्धिते। निर्गतो वर्णाश्रमेभ्यो निष्ठ्य श्चाण्डालादि: (१)। (अरण्याण्य:) आरण्या: सुमनस:। (दूरादेत्य:) दूरेत्य: (२)। (उत्तरादाहञ्) औत्तराह:।

**ऐषमो-ह्य:- श्वसोऽन्यतरस्याम् ४।२।१०५**

एभ्यस्त्यब्वा। पक्षे वक्ष्यमाणौ ट्यु-ट्युलौ। ऐषमस्त्यम्। ऐषमस्तनम्। ह्यस्त्यम् ह्यस्तनम्। श्वस्त्यम्। श्वस्तनम्। पक्षे शौवस्तिकं (३) वक्ष्यते।

**वृद्धाच्छ: ४।२।१२४**

शालीय:।

**त्यदादीनि च १।१।७४**

वृद्धसंज्ञानि स्यु:। तदीय:। वा नामधेयस्य वृद्धसंज्ञा। देवदत्तीय:, दैवदत्त:।

**भवतष्ठक्छसौ ४।२।११५**

वृद्धाद्भवत एतौ स्त:। भावत्क: (४)। (सिति च) सिति तद्धिते पूर्वं पदं स्यात्। जश्त्वम्। भवदीय:। वृद्धादित्यनुवृत्ते: शत्रन्तादणेव—भावत:।

**काश्यादिभ्यष्ठञ्-ञिठौ ४।२।११६**

इकार उच्चारणार्थ:। काशिकी, काशिका। वैदिकी। वैदिका। (आपदादिपूर्वपदात्कालान्तात्) आपदादिराकृतिगण:। आपत्कालिकी, आपत्कालिका।

**धन्व-योपधाद्वुञ् ४।२।१२१**

धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ् स्यात्। ऐरावतं (५) धन्व-ऐरावतक:। साङ्काश्य काम्पिल्यशब्दौ वुञ्छणादिसूत्रेण ण्यान्तौ। साङ्काश्यक:। काम्पिल्यक:।

---

(१) निष्ठ्य:- त्यप्, सस्य षत्वम्, तकारस्य ष्टुत्वेन ट:।

(२) दूरादागतो दूरे भवो वा दूरेत्य:, "दूरात्" शब्दादव्ययात् एत्यप्रत्यय: 'अव्ययानां भमात्रे टिलोप:' इति टिलोप: (आत् इत्यस्य लोप:)।

(३) पक्षे 'श्वसस्तुट् च' इति ठञि तस्य इकादेशे तुडागमे 'द्वारादीनां च' इत्यौजागमे च सति शौवस्तिकम् इति रूपं सिध्यति।

(४) भातेर्डवतु प्रत्यये निष्पन्नस्य 'भवत्' शब्दस्य त्यदादित्वात् वृद्धसंज्ञायां छप्रत्यये प्राप्ते ठक् छसौ तदपवादौ विधीयेते। तत्रभवतोऽयं भावत्क:, ठक् प्रत्यय:, ठस्य 'इसुसुक्तान्तात्क:' इति कादेश:, कित्वादादिवृद्धि:।

(५) ऐरावताख्यं धन्वेत्यर्थ:, धन्व=मरुप्रदेश:, आष्टकं नाम धन्वेति भाष्यान्नपुंसकत्वमपि 'धन्वन्' शब्दस्येति बोध्यम्। ऐरावताख्ये मरुप्रदेशे भवम् ऐरावतकम्।

**नगरात्कुत्सन–प्रावीण्ययोः ४।२।१२८**

कुत्सिते प्रावीण्ये च नगरशब्दाद्वुञ् स्यात् । नागरकश्चौरः शिल्पी वा । एतयोः किम्? नागरा ब्राह्मणाः ।

**अरण्यान्मनुष्ये ४।२।१२९**

वुञ् स्यात् । औपसंख्यानिक णस्यापवादः (१)। (पथ्य ध्याय न्याय विहार मनुष्य हस्तिष्विति वाच्यम्) अरण्यकः पन्थाः, अध्यायो, न्यायो, विहारो, मनुष्यो हस्ती वा।

**गर्तोत्तरपदाच्छः ४।२।१३७**

देश इत्येव। वृकगर्तीयम् (२)।

**गहादिभ्यश्च ४।२।१३८**

गहीयः ।

**युष्मदस्मदोरन्यतरस्यां खञ् च ४।३।१**

चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वायं युष्मदीयः । अस्मदीयः ।

**तस्मिन्नणि च युष्माकास्माकौ ४।३।२**

युष्मदस्मदोरेतावादेशौ स्तः खञि अणि च । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः ।

**तवक–ममकावेकवचने ४।३।३**

एकार्थवाचिनोर्युष्मदस्मदोस्तवक–ममकौ स्तः खञि अणि च । तावकीनः, तावकः । मामकीनः, मामकः । छे तु–

**प्रत्ययोत्तरपदयोश्च ७।२।९८**

मपर्यन्तयोरेकार्थवाचिनोस्त्व–मौ स्तः प्रत्यये, उत्तरपदे च । त्वदीयः । मदीयः। त्वत्पुत्रः । मत्पुत्रः ।

**मध्यान्मः ४।३।८**

मध्यमः ।

---

(१) 'अरण्याण्णः' इति विहितस्य णस्येत्यर्थः ।

(२) वृकगर्तो नाम देशः, तत्र भवं जातं वा वृकगर्तीयम् ।

## अ सांप्रतिके ४।३।९

मध्यशब्दादप्रत्ययः सांप्रतिकेऽर्थे । उत्कर्षापकर्षहीनो मध्यो वैयाकरणः । मध्यं दारु, नाति ह्रस्वं नाति दीर्घमित्यर्थः ।

## द्वीपादनुसमुद्रं यञ् ४।३।१०

समुद्रसमीपे यो द्वीपस्तद्विषयाद् द्वीपशब्दाद्यञ् स्यात् । द्वैप्यम्, द्वैप्या ।

## कालाठ्ठञ् ४।३।११

कालिकम् । मासिकम् । सांवत्सरिकम् । (**अव्ययानां भमात्रे टिलोपः**) सायंप्रातिकः । पौनःपुनिकः । कथं तर्हि 'शार्वरस्य तमसो निषिद्धये' इति कालिदासः । 'अनुदितौषसरागः, इति भारविः । समकालीनं, प्राक्कालीनमित्यादि च । अपभ्रंशा (१) एव इति प्रामाणिकाः । तत्र जात इति यावत्कालाधिकारः ।

## श्राद्धे (२) शरदः ४।३।१२

ठञ् स्यात् । ऋत्वणोऽपवादः । शरदिभवं–शारदिकं श्राद्धम् (३) ।

## विभाषा रोगातपयोः ४।३।१३

शारदिकः, शारदो वा रोग आतपो वा ।

## निशा–प्रदोषाभ्यां च ४।३।१४

ठञ् वा । नैशिकम् । नैशम् । प्रादोषिकं, प्रादोषम् ।

## श्वसस्तुट् च ४।३।१५

श्वसष्ठञ् वा तुट् च ।

---

(१) अपशब्दा इत्यर्थः । तादृशसिद्धौ प्रमाणाभावादिति तदाशयः । केचित्तु– "अमुकः पुरतः परेद्युरित्यादिवद् एतेऽपिशब्दा अव्युत्पन्नाः, पृषोदरादयो वा साधवः" इत्याहुः, इति बालमनोरमा ।

(२) शरदि भवं श्राद्धमित्यर्थे 'शरद्' शब्दात् 'कालाठ्ठञ्' इत्यस्य बाधकः 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणि' ति– अण् प्राप्नोति तद्बाधनाय ठञ्विधिरयम् । तदेवाह– ऋत्वणोऽपवाद इति ।

(३) श्रद्धया क्रियमाणं पित्र्यं कर्म = श्राद्धम् 'प्रज्ञाश्रद्धार्चादिभ्यो णः, इति मत्वर्थीये णप्रत्यये सिध्यतीदम् । श्रद्धत्वान् पुरुषस्तु न गृह्यतेऽनभिधानात् ।

**द्वारादीनां च ७।३।४**

एषां न वृद्धि रैजागमश्च । शौवस्तिकम् ।

**सन्धिवेलाद्यृतु– नक्षत्रेभ्योऽण् ४।३।१६**

सन्धिवेलायां भवं–सान्धिवेलम् । ग्रैष्मम् । सन्धिवेला । सन्ध्या । अमावास्या । त्रयोदशी । चतुर्दशी । पौर्णमासी । प्रतिपद् ।

**प्रावृष एण्यः ४।३।१७**

प्रावृषेण्यः ।

**वर्षाभ्यष्ठक् ४।३।१८**

वर्षासु साधु – वार्षिकं वासः ।

**सर्वत्राण् च तलोपश्च ४।३।२२**

हेमन्तादण् तलोपश्च वेदलोकयोः । चकारात्पक्षे ऋत्वण् । हेमन्ते भवं– हैमनम्, हैमन्तं वा वसनम् ।

**सायं–चिरं–प्राह्णे–प्रगे–ऽव्ययेभ्यष्टयुटयुलौ तुट् च ४।३।२३**

सायमित्यादिभ्यश्चतुर्भ्यः अव्ययेभ्यश्च कालवाचिभ्यष्ट्युटयुलौ स्तस्तयोस्तुट् च । सायं भवं–सायन्तनम् । चिरन्तनम् । प्राण्हप्रगयोरेदन्तत्वं निपात्यते । प्राण्हेतनम् । प्रगतनम् । दोषातनम् । दिवातनम् । (**चिरपरुत्–परारिभ्यस्त्नो वक्तव्यः**) चिरत्नम् । परुत्नम् । परारित्नम् । (**अग्रादिपश्चाड्डिमच्**) अग्रिमम् । आदिमम् । पश्चिमम् । (**अन्ताच्च**) अन्तिमम् ।

**विभाषा पूर्वाह्णापराह्णाभ्याम् ४।३।२४**

आभ्यां ट्युटयुलौ वा स्तस्तयोस्तुट् च । पक्षे ठञ् । पूर्वाण्हेतनम्, पौर्वाण्हिकम् । अपराण्हेतनम्, आपराण्हिकम् ।

**तत्र जातः ४।३।२५**

सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः – स्रौघ्नः । औत्सः । राष्ट्रियः । अवारपारीणः, इत्यादि ।

**प्रावृषष्ठप् ४।३।२६**

एण्यस्यापवादः । प्रावृषिकः ।

**प्राय भवः ४।३।३९**

तत्रेत्येव । स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः ।

**संभूते ४।३।४१**

स्रुघ्ने संभवति – स्रौघ्नः ।

**कोशाड्ढञ् ४।३।४२**

कौशेयं वस्त्रम् ।

**तत्र भवः(१) ४।३।५३**

स्रुघ्ने भवः – स्रौघ्नः । औरसः । राष्ट्रियः(२) ।

**दिगादिभ्यो यत् ४।३।५४**

दिश्यम् । वर्ग्यम् ।

**शरीरावयवाच्च ४।३।५५**

दन्त्यम् । कण्ठ्यम् ।

**दृति–कुक्षि–कलशि–वस्त्यस्त्यहेर्ढञ् ४।३।५६**

दार्तेयम् । कलशिर्घटः, तत्र भवं – कालशेयम् ।

**ग्रीवाभ्योऽण् च ४।३।५७**

चाड्ढञ् । ग्रैवेयम्, ग्रैवम् ।

**गम्भीराञ्ञ्यः ४।३।५८**

गम्भीरे भवं–गाम्भीर्यम् ।

**अव्ययीभावाच्च ४।३।५९**

परिमुखेभवं–पारिमुख्यम् । **(परिमुखादिभ्य एवेष्यते)** नेह–औपकूलः (३) ।

---

(१) सप्तम्यन्ताद् भव इत्यर्थेऽणादयो घादयश्च यथायथं स्युरित्यर्थः ।

(२) राष्ट्रे भवः – राष्ट्रियः । घप्रत्ययः ।

(३) उपकूलं भवः–औपकूलः ।

**अन्तः पूर्वपदाट्ठञ् ४।३।६०**

अव्ययीभावादित्येव । वेश्मनि इति–अन्तर्वेश्मम्, (१) तत्र भवम्–आन्तर्वेश्मिकम् । आन्तर्गणिकम् । (अध्यात्मादेष्ठञिष्यते) अध्यात्मं भवं–आध्यात्मिकम् ।

**अनुशतिकादीनां च ७।३।२०**

एषामुभयपदवृद्धिर्ञिति णिति किति च । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । आकृतिगणोऽयम् ।

**जिह्वामूलाङ्गुलेश्छः ४।३।६२**

जिह्वामूलीयम् । अङ्गुलीयम् ।

**वर्गान्ताच्च ४।३।६३**

कवर्गीयम् ।

**तत आगतः ४।३।७४**

स्रुघ्नदागतः–स्रौघ्नः ।

**ठगायस्थानेभ्यः ४।३।७५**

शौल्कशालिकः ।

**विद्यायोनिसंबन्धेभ्यो वुञ् ४।३।७७**

औपाध्यायकः । पैतामहकः ।

**ऋतष्ठञ् ४।३।७८**

वुञोऽपवादः । हौतृकम् । मातृकम् । भ्रातृकम् ।

**पितुर्यच्च ४।३।७९**

चाठ्ठञ् । रीङ्ऋतः । यस्येति लोपः । पित्र्यम् । पैतृकम् ।

**गोत्रादङ्कवत् (२) ४।३।८०**

बिदेभ्य आगतं–बैदम् । गार्गम् । दाक्षम् । औपगवकम् ।

---

(१) अत्र अव्ययीभाव समासेजाते 'नपुंसकादन्यतरस्याम्' इति समासान्तष्टच्, टिलोपे 'अन्तर्वेश्मम्' इति, ततो भावार्थे ठञि ठस्येकादेशे आदिवृद्धिः, आन्तर्वेश्मिकम् । एवं अन्तर्गणे भवमान्तर्गणिकम् ।

(२) अङ्के ये प्रत्यया विहिता ते तत आगत इत्यर्थेऽपि भवन्तीत्यर्थः ।

**हेतु-मनुष्येभ्योऽन्यतरस्यां रूप्यः ४।३।८१**

समादागतं-समरूप्यम् । पक्षे गहादित्वाच्छः, समीयम् । देवदत्तीयम् । देवदत्तरूप्यम् ।

**मयट् च ४।३।८२**

सममयम् ।

**प्रभवति (१) ४।३।८३**

हिमवतः प्रभवति-हैमवती (२) गङ्गा।

**विदूराञ्ञ्यः ४।३।८४**

विदूरात्प्रभवति वैदूर्यो मणिः ।

**तद्गच्छति पथिदूतयोः ४।३।८५**

स्रुघ्नं गच्छति-स्रौघ्नः पन्था दूतो वा ।

**अभिनिष्क्रामति द्वारम् ४।३।८६**

स्रुघ्नमभिगच्छति-स्रौघ्नं कान्यकुब्जद्वारम् ।

**अधिकृत्य (३) कृते ग्रन्थे ४।३।८७**

शारीरकमधिकृत्य कृतो ग्रन्थः- शारीरकीयः । शारीरकं भाष्यमितित्वभेदोपचारात् (४) ।

**सोऽस्य निवासः (५) ४।३।८९**

स्रुघ्नो निवासोऽस्य-स्रौघ्नः ।

**तेन प्रोक्तम् ४।३।१०१**

पाणिनिना प्रोक्तं-पाणिनीयम् ।

**पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ४।३।११०**

णिनिः स्यात् । पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः। शैलालिनो नटाः ।

**कर्मन्द-कृशाश्वादिनिः ४।३।१११**

कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीयते-कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः ।

---

(१) ततः प्रभवतीत्यर्थे पञ्चम्यन्ताद् यथा विहितं प्रत्ययाः स्युरित्यर्थः ।

(२) अण्प्रत्ययः, ङीप्, आदिवृद्धिः ।

(३) अधिकृत्य कृतो ग्रन्थ इत्यर्थेऽणादयः प्रत्ययाः स्युरित्यर्थः ।

(४) प्रतिपादके भाष्ये शारीरकस्य जीवात्मनः प्रतिपाद्यस्य अभेदोपचार इत्यर्थः ।

(५) प्रथमान्तादस्य निवास इत्यर्थेऽणादयः प्रत्ययाः स्युरित्यर्थः ।

**उपज्ञाते (१) ४।३।११५**

पाणिनिना उपज्ञातं (२) –पाणिनीयम् ।

**तस्येदम्** (३) ४।३।१२०

उपगोरिदमौपगवम् । (**समिधामाधाने षेण्यण्** (४)) **सामिधेन्यो मन्त्रः** (५) ।

**रथाद्यत् ४।३।१२१**

रथ्यं **चक्रम्** ।

**पत्रपूर्वादञ्** ४।३।१२२

अश्वरथस्येदम्–आश्वरथम् ।

**हलसीराट्ठक्** ४।३।१२४

हालिकम् । सैरिकम् ।

**गोत्रचरणाद्वुञ्** ४।३।१२६

औपगवम् । (**चरणाद्धर्माम्नाययोरिति वक्तव्यम्**) काठकम् (६)।

**संघाङ्कलक्षणेष्वञ्यञिञामण्** (७) ४।३।१२७

(**घोषग्रहणमपि कर्तव्यम्**) अञ्–बैदः=संघोऽङ्को घोषो वा । बैदं लक्षणम् । यञ्–गार्गः । गार्गम् । इञ्–दाक्षः । दाक्षम् । परम्परासम्बन्धोऽङ्कः, साक्षात्तु लक्षणम् ।

**॥ इति शैषिकाः ॥**

---

(१) तेनोपज्ञातमित्यर्थे तृतीयान्ताद् यथा विहितं प्रत्ययाः स्युरित्यर्थः ।

(२) उपज्ञातम्–प्रथमज्ञातम् । 'उपज्ञाज्ञानमाद्यं स्यादि'त्यमरः । उपदेशं बिना ज्ञातं=उपज्ञातम् इति मनोरमा ।

(३) षष्ठ्यन्तादिदमित्यर्थेऽणादयो घादयश्च स्युरिति सूत्रार्थः ।

(४) आधीयतेऽनेनेत्याधानो मन्त्रः, आधानो मन्त्र इत्यर्थे समिध् शब्दात् षेण्यण्प्रत्ययो वाच्य इत्यर्थः।

(५) समिधामाधानो मन्त्रः–सामिधेन्यः ।

(६) कठेन प्रोक्तमधीयते इति कठाः, तेषां धर्म आम्नायो वा = काठकः । आम्नायो= वेदाभ्यासः ।

(७) अञन्तात्–यञन्तात्–इञन्ताच्च सङ्घे–अङ्के–लक्षणे च इदन्त्वेन विवक्षितेऽण् स्यादित्यर्थः ।

## अभ्यासः

**प्रश्न १. 'शेषे' इति सूत्रस्यार्थो लेख्यः**

उ०– अपत्यादि चातुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युरिति सूत्रार्थः ।

**प्रश्न २. ग्रामीणः, इति प्रयोगः कथं निष्पद्यते ?**

उ०– ग्रामे जातो भवोवेति विग्रहे सप्तम्यन्ताद् ग्रामशब्दात् **'ग्रामाद्य–खञौ' इति सूत्रेण** खञि अनुबन्धलोपे खस्येनादेशे भत्वेऽकारलोपे णत्वे स्वादि कार्ये रूपं साधु ।

**प्रश्न ३. पाश्चात्यः, इत्यस्य सिद्धिपथं दर्शयत**

उ०– पश्चाज्जातो भवोवे तिविग्रहे पश्चात् शब्दात् 'दक्षिणा– पश्चात्–पुरसस्त्यक्' इति त्यक्यनुबन्धलोपे कित्वादादिवृद्धौ स्वादिकार्ये पाश्चात्य इति साधु ।

**प्रश्न ४. 'ह्रस्वात्तादौ तद्धिते' इति सूत्रस्यार्थो लिख्यताम्**

उ०– ह्रस्वादिणः सस्य षस्तादौ तद्धिते – इति– सूत्रार्थः ।

**प्रश्न ५. त्वदीयः, इति प्रयोगः सूत्रप्रत्ययप्रदर्शनपूर्वकं साधनीयः**

उ०– त्वदीय इत्यत्र तव अयम् इति विग्रहे षष्ठ्यन्ताद् युष्मत् शब्दात् 'युष्मदस्मदोरन्यतरस्यां खञ् च' इति चकाराच्छप्रत्यये छस्येयादेशे 'प्रत्ययोत्तरपदयोश्चे,ति मपर्यन्तस्य त्वादेशे स्वादि कार्ये उक्त रूपं निष्पन्नम् ।

## अभ्यासार्थं प्रश्नाः

(१) 'ह्यस्तनम्' इत्यस्य साधुत्वं दर्शयत ।

(२) **सायंप्रातिकः, प्रावृषेण्यः, कौशेयम्, ऐहलौकिकम्, पाणिनीयम् एते प्रयोगाः प्रक्रियाप्रदर्शनपूर्वकं लेख्याः ।**

(३) अस्मदीयः– इति प्रयोगः कथं सिध्यति ?

(४) भवदीयः– इत्यत्र विशेषकार्यं निर्देश्यम् ।

(५) **नैशिकम्, नैशं तमः इति प्रयोगद्वयं सविग्रहं निष्पाद्यताम् ।**

(६) 'ग्रीवाभ्योऽण् च' सूत्रस्यास्योदाहरणं प्रदर्शयत ।

(७) आधिभौतिकमित्यत्र को विग्रहः, कश्च सिद्धिप्रकारः ?

(८) हैमवती गङ्गा – इत्यत्र हैमवतीतिपदं कथं सिध्यति ?

(९) 'कालाठ्ठञ्', अस्य सूत्रस्योदाहरणानि पुरस्क्रियन्ताम् ।

(१०) सायन्तनम्, वन्यम्, अङ्गुलीयकम्, शारीरकीयः, पाणिनीयम् एते प्रयोगाः ससूत्र निर्देशं साध्याः ।

(११) अधोनिर्दिष्ट विग्रहस्थलेषु सम्पत्स्यमानानि रूपाणि प्रदर्श्यन्ताम्

राष्ट्रे जातः, वाराणस्यां भवम्, अरण्ये भवः, मध्ये भवः, शरदि भवम्, वर्षासु साधु, पितुरागतम्, कठेन प्रोक्तमधीयते इति कठाः तेषां धर्म आम्नायो वा, रथस्येदम् ।

# अथ प्रादीव्यतीयाः

**तस्य विकारः (१) ४।३।१३४**

(अश्मनो विकारे टिलोपो वक्तव्यः) अश्मनो विकारः–आश्मः (२)। भास्मनः (३)। मार्तिकः।

**अवयवे च प्राण्योषधिवृक्षेभ्यः ४।३।१३५**

चाद्विकारे। मयूरस्य विकारोऽवयवो वा=मायूरः। मौर्वम्=काण्डं भस्म वा। पैप्पलम्।

**त्रपु–जतुनोः षुक् ४।३।१३८**

आभ्यामण् एतयोः षुक् च। त्रापुषम् (४)। जातुषम्।

**ओरञ् ४।३।१३९**

दैवदारवम्।

**अनुदात्तादेश्च ४।३।१४०**

अञ्। कापित्थम्।

**पलाशादिभ्यो वा ४।३।१४१**

अञ्। पालाशम्। खादिरम्।

**शम्याः ष्लञ् ४।३।१४२**

शामीलम्।

**मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः ४।३।१४३**

प्रकृतिमात्रान्मयड् वा स्याद्विकारावयवयोः। अश्ममयम्, आश्मनम्। अभक्ष्येत्यादि किम्? मौद्गः सूपः। कार्पासमाच्छादनम्।

**नित्यं वृद्धशरादिभ्यः ४।३।१४४**

आम्रमयम्। शरमयम्। एकाचो नित्यम्–वाङ्मयम् (५)।

**गोश्च पुरीषे (६) ४।३।१४५**

गोमयम्।

---

(१) षष्ठ्यन्ताद् विकार इत्यर्थे प्रत्ययाः स्युरित्यर्थः।

(२) अण् प्रत्ययः, टिलोपः, आदिवृद्धिः।

(३) अण्प्रत्ययः, 'अन्' इति प्रकृति भावाद् 'नस्तद्धिते' इति टिलोपो न।

(४) त्रपुणो (रङ्गस्य) विकारः = त्रापुषम्, जतुनो (लाक्षायाः) विकारः– जातुषम्।

(५) नित्यमिति योगविभागाल्लब्धमिदम्, वाचो विकारो वाङ्मयम् शास्त्रम्।

(६) गोशब्दात्पुरीषेऽर्थे नित्य मयट् इत्यर्थः। गोः पुरीषम् –गोमयम्।

## एण्याढञ् (१) ४।३।१५९

ऐणेयम् । एणस्य तु ऐणम् ।

## गोपयसोर्यत् (२) ४।३।१६०

गव्यम् । पयस्यम् ।

## फलेलुक् ४।३।१६३

विकारावयवप्रत्ययस्य ।

## लुक् तद्धितलुकि ६।५।७

उपसर्जन स्त्रीप्रत्ययस्य । आमलक्याः फलम्–आमलकम् ।

## प्लाक्षादिभ्योऽण् ४।३।१६४

विधानसामर्थ्यान्न लुक् । प्लाक्षम् ।

## न्यग्रोधस्य च केवलस्य ७।३।५

अस्य न वृद्धि रैजागमश्च । नैयग्रोधम् ।

## जम्ब्वा वा ४।३।१६५

अण् फले । जाम्बवम् । पक्षे ओरञ्, तस्य लुक्(३) – जम्बु ।

## लुप् च ४।३।१६६

जम्ब्वाः फलप्रत्ययस्य लुब्वा स्यात् । लुपि (४) युक्तवत् – जम्बूः । (**फलपाकशुषामुपसंख्यानम्**) व्रीहयः । मुद्गाः । (**पुष्पमूलेषु बहुलम्**) मल्लिकायाः पुष्पं – मल्लिका । जात्याः पुष्पं – जातिः । विदार्या मूलं–विदारी (५) । बहुलग्रहणान्नेह–पाटलानि (६) पुष्पाणि । साल्वानि मूलानि । बाहुलकात्क्वचिल्लुक् । अशोकम् । करवीरम् ।

---

(१) एणीशब्दात् ढञ् स्यादवयवे विकारे चार्थे ।

(२) गोशब्दात्पयः शब्दाच्च यत्स्यादवयवे विकारे चार्थे ।

(३) फले लुगिति सूत्रेणेत्यर्थः । अञो लुकि विशेष्यानुसारेण नपुंसकत्वाद् ह्रस्वे जम्बु ।

(४) लुकैव सिद्धे लुब्विधेः फलं दर्शयति – लुपि युक्तवदिति । फलप्रत्ययस्य लुपि युक्तवदिति । फलप्रत्ययस्य लुपि युक्तवत्वेन विशेष्यलिङ्गवचने बाधित्वात् स्त्रीत्वमेकवचनं चेत्यर्थः, जम्बूः, जम्ब्वाः, फलानीति विग्रहेऽपि जम्बूरेव ।

(५) जाति ङीषन्तमिदम् । प्रत्ययस्वरेणान्तोदात्तम्, अनुदात्तादित्वादञ्, तस्यानेन लुप् । लुपि युक्तवत्वात्स्त्रीत्वम् ।

(६) पाटलायाः पुष्पाणि = पाटलानि, बिल्वाद्यण्, तस्य न लुप् । एवं साल्वस्य मूलानि साल्वानि ।

**हरीतक्यादिभ्यश्च ४।३।१६७**

फलप्रत्ययस्य लुप् । (**हरीतक्यादीनां (१) लिङ्गमेव प्रकृतिवत्**) हरीतक्याः फलानि- हरीतक्यः ।

## ॥ इति प्राग्दीव्यतीयाः ॥

### अभ्यासः

**प्रश्न १. 'तस्य विकार' इति सूत्रस्यार्थो वर्णनीयः उदाहरणं च साध्यम्**

उ०- षष्ठयन्ताद् विकार इत्यर्थे प्रत्ययाः स्युरिति सूत्रार्थः । उदाहरणं यथा- आश्मः । अत्र अश्मनो विकार इति विग्रहे षष्ठयन्तादश्मन् शब्दात् 'तस्य विकार' इत्यण्प्रत्यये भत्वे 'न स्तद्धिते' इति टिलोपे प्राप्ते तं प्रबाध्य 'अन्' इति प्रकृतिभावे प्राप्ते तं प्रबाध्य 'अश्मनो विकारे टिलोपो वक्तव्यः' इति वार्तिकेन टिलोपे आदिवृद्धौ स्वादिकार्ये 'आश्मः' इति रूपं सिद्धम् ।

**प्रश्न २. ऐणेयम् इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ०- एण्या विकार इति विग्रहे षष्ठयन्तादेणीशब्दात् 'एण्या ढञ्' इति ढञ्यनुबन्ध लोपे ढस्य एयादेशे भत्वे ईकारलोपे आदिवृद्धौ स्वादिकार्ये ऐणेयमिति रूपं जातम्, सूत्रे स्त्रीत्व निर्देशात् पुंवाचकात् एणशब्दात्तु ढञ्प्राप्ति विरहादणेवेति ऐणमिति रूपं जायते ।

### अभ्यासार्थं प्रश्नाः

(१) 'भास्मनः- इति कथं सिध्यति ?

(२) गोशब्दाद् 'गोमय' मिति रूपं कस्मिन्नर्थे सम्पद्यते ?

(३) नैयग्रोधम्- इत्यत्र केन सूत्रेण कः प्रत्ययः ?

(४) 'लुक् तद्धितलुकि' इति सूत्रस्य सोदाहरणमर्थं लिखत ।

(५) अधस्तनपदानि वाक्ये प्रयुज्यन्ताम्-
मायूरः, खादिरम्, गव्यम्, व्रीहयः, जाम्बवम् ।

---

(१) लुपि युक्तवदिति वचनेन लिङ्गवचनयोरुभयोः प्रकृतिवत्वे प्राप्ते, वचनातिदेश निषेधार्थमिदं वार्तिकम् ।

# अथ ठगधिकारः

**प्राग्वहतेष्ठक् ४।४।१**

तद्वहतीत्यतः प्राक् ठगधिक्रियते । (**तदाहेति माशब्दादिभ्य उपसंख्यानम्**(१) ) माशब्दं कार्षीरिति य आह स–माशब्दिकः (२)। (**आहौ** (३) **प्रभूतादिभ्यः**) प्रभूतमाह–प्राभूतिकः । पार्याप्तिकः। (**पृच्छतौ सुस्नातादिभ्यः**) सुस्नातं पृच्छति–सौस्नातिकः । सौखशायनिकः (४)। अनुशतिकादिः । (**गच्छतौ परदारादिभ्यः**) पारदारिकः । गौरुतल्पिकः ।

**तेन दीव्यति खनति जयति जितम्** (५) **४।४।२**

अक्षैर्दीव्यति खनति जयति जितं वा–आक्षिकः ।

**संस्कृतम्** (६) **४।४।३**

दध्ना संस्कृतम्–दाधिकम् । मारीचिकम् ।

**तरति** (७) **४।४।५**

उडुपेन तरति–औडुपिकः ।

**गोपुच्छाद् ठञ् ४।४।६**

गौपुच्छिकः (८) ।

**नौद्व्यचष्ठन् ४।४।७**

नाविकः । घटिकः ।

**चरति ४।४।८**

हस्तिना चरति–हास्तिकः । शकटेन चरति–शाकटिकः । दध्ना चरति–दाधिकः ।

---

(१) ठकः इति शेषः ।
(२) ठक्, ठस्यैकादेशः ।
(३) आहेत्यर्थे द्वितीयान्तेभ्यः प्रभूतादिभ्यष्ठग् वाच्य इत्यर्थः ।
(४) अनुशतिकादित्वादुभयपदवृद्धिः ।
(५) दीव्यतीत्याद्यर्थेषु तृतीयान्तात् ठगित्यर्थः ।
(६) संस्कृतमित्यर्थे तृतीयान्तात् ठक् स्यादित्यर्थः ।
(७) तरतीत्यर्थे तृतीयान्तात् ठक् इत्यर्थः ।
(८) गोपुच्छेन तरति–गौपुच्छिकः ।

**पर्पादिभ्यःष्ठन् ४।४।१०**

पर्पेण चरति–पर्पिकः । येन पीठेन पङ्गवश्चरन्ति स पर्पः । अश्विकः। रथिकः ।

**श्वगणाट्ठञ् च ४।४।११**

चात् ष्ठन् ।

**श्वादेरिञि (१) ७।३।८**

ऐज् न । श्वाभस्त्रिः (२) । (इकारादावितिवाच्यम्(३)) श्वगणेन चरति–श्वागणिकः, श्वगणिकः ।

**वेतनादिभ्यो जीवति ४।४।१२**

वेतनेन जीवति वैतनिकः । धानुष्कः (४) ।

**हरत्युत्सङ्गादिभ्यः ४।४।१५**

उत्सङ्गेन हरति औत्सङ्गिकः ।

**भस्त्रादिभ्यः ष्ठन् ४।४।१६**

भस्त्रया हरति–भस्त्रिकः । षित्वाद् भस्त्रिकी (५) ।

**विभाषा विवधात् ४।४।१७**

ष्ठन् । विवधेन हरति–विवधिकः। पक्षे ठक्–वैवधिकः । एकदेशविकृतत्वाद् वीवधादपि वीवधिकः, वैवधिकः । विवध–वीवधशब्दौ उभयतोबद्धशिक्येस्कन्धवाह्ये काष्ठे वर्तेते ।

**निर्वृत्तेऽक्षद्यूतादिभ्यः ४।४।१९**

अक्षद्यूतेन निर्वृत्तम्– आक्षद्यूतिकं वैरम् ।

**संसृष्टे ४।४।२२**

दध्ना संसृष्टं– दाधिकम् ।

**लवणाल्लुक् ४।४।२४**

लवणेन संसृष्टो– लवणः सूपः ।

---

(१) श्वन् शब्दस्य द्वारादित्वात्, ऐजागमे प्राप्ते–आह–श्वादेरिञि ।

(२) श्वभस्त्रस्यापत्यम्–श्वाभस्त्रिः, अत इञ्, ऐजागमाभावे आदिवृद्धिः ।

(३) इञि, इति परित्यज्य 'इकारादौ' इति वाच्यमित्यर्थः, तेन 'श्वागणिकः' इत्यत्रापि न ऐजागमः किन्तु–आदिवृद्धिः । ठञ् प्रत्ययः, ठस्येकादेशः । ष्ठनि श्वगणिकः ।

(४) 'इसुसुक्तान्तादिति ठस्येकादेशः ।

(५) 'षिद्गौरादिभ्य, इति स्त्रियां ङीष् ।

**मुद्गादण् ४।४।२५**

मौद्गश्रोदनः ।

**उञ्छति ४।४।३२**

बदराण्युञ्छति– बादरिकः ।

**रक्षति ४।४।३३**

समाजं रक्षति – सामाजिकः ।

**शब्ददर्दुरं करोति ४।४।३४**

शब्दं करोति शाब्दिकः । दार्दुरिकः ।

**पक्षिमत्स्यमृगान् हन्ति ४।४।३५**

स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम् । मत्स्यपर्यायेषु मीनस्यैव । पक्षिणो हन्ति– पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाकुलिकः । मार्गिकः । हारिणिकः । सारङ्गिकः ।

**धर्मं चरति ४।४।४१**

धार्मिकः । (अधर्माच्चेति वक्तव्यम्) आधर्मिकः ।

**तदस्य पण्यम् ४।४।५१**

अपूपाः पण्यमस्य– आपूपिकः ।

**लवणाट् ठञ् ४।४।५३**

लावणिकः ।

**शिल्पम् (१) ४।४।५५**

मृदङ्गवादनं शिल्पमस्य– मार्दङ्गिकः ।

**प्रहरणम् (२) ४।४।५७**

असिः प्रहरणमस्य– आसिकः । धानुष्कः ।

**शक्तियष्ट्योरीकक् (३) ४।४।५९**

शाक्तीकः । याष्टीकः ।

---

(१) अस्य शिल्पमित्यर्थे प्रथमान्तात् ठक् स्यादित्यर्थः ।

(२) अस्य प्रहरणम् इत्यर्थे प्रथमान्तात् ठक् इत्यर्थः ।

(३) प्रथमान्ताभ्यां शक्ति– यष्टिशब्दाभ्यां अस्य प्रहरणमित्यर्थे ईकक् प्रत्ययः स्यात्, ठकोऽपवादोऽयम् ।

**अस्ति नास्ति दिष्टं मतिः ४।४।६०**

अस्ति परलोक इत्येवं मतिर्यस्य स– आस्तिकः। नास्तीति मतिर्यस्य स– नास्तिकः। दिष्टमिति मतिर्यस्य स– दैष्टिकः।

**शीलम् ४।४।६१**

अपूप भक्षणं शीलं यस्य स–आपूपिकः।

**छत्रादिभ्यो णः ४।४।६२**

गुरोर्दोषाणामावरणं छत्रम्, तच्छीलमस्येति– छात्रः।

**तत्र नियुक्तः (१) ४।४।६९**

आकरे नियुक्तः– आकरिकः।

**निकटे वसति (२) ४।४।७३**

नैकटिको भिक्षुः।

## ॥ इति ठगधिकारः ॥

### अभ्यासः

**प्रश्न १.** 'पृच्छतौ सुस्नातादिभ्यः' इति **वार्तिकस्यार्थं विलिख्योदाहरणद्वयं सुसाध्यम्**

उ०– (पृच्छतौ सुस्नातादिभ्यः)– पृच्छतीत्यर्थे द्वितीयान्तेभ्यो ठक् वाच्य इत्यर्थः। उदाहरणं यथा सौस्नातिकः। सौखशायनिकः।

सौस्नातिक इत्यत्र सुस्नातं पृच्छतीति विग्रहे द्वितीयान्तसुस्नातशब्दात् पूर्वोक्त वार्तिकेन ठकि ठस्येकादेशे 'किति चे' त्यादिवृद्धौ रूपं साधु।

सौखशायनिकः– इत्यत्र सुखशयनं पृच्छतीति विग्रहे सुखशयनशब्दात्पूर्वोक्तवार्तिकेन ठकि ठस्येकादेशे अनुशतिकादित्वात् 'अनुशतिकादीनां च' इत्युभयपदयोरादिवृद्धौ रूपं साधु।

**प्रश्न २. शाकटिकः– इति रूपं कथं सिध्यति ?**

उ०– शकटेन चरति=गच्छतीति विग्रहे तृतीयान्तशकटशब्दात् 'चरति[illegible] सूत्रेण ठकि ठस्येकादेशे कित्वादादिवृद्धौ स्वादिकार्ये शाकटिक इति रूपं सिद्धम्।

**प्रश्न ३. छात्रः– इति प्रयोगः कथं सिध्यति ?**

उ०– गुरोर्दोषाणामावरणं छत्रम्, तच्छीलमस्येति विग्रहे प्रथमान्त छत्रशब्दात् 'शीलमि'ति सूत्रेण प्राप्तं ठकं प्रबाध्य 'छत्रादिभ्यो णः' इति णप्रत्ययेऽनुबन्धलोपे णित्वादादिवृद्धौ 'यस्येति चे' त्यलोपे स्वादिकार्ये छात्रः इति निष्पद्यते।

---

(१) सप्तम्यन्तात् नियुक्त इत्यर्थे ठक् स्यादित्यर्थः।

(२) सप्तम्यन्ताद् निकटशब्दाद् वसतीत्यर्थे ठक् स्यादित्यर्थः।

## अभ्यासार्थं प्रश्नाः

(१) पर्पशब्दस्यार्थं प्रदर्श्य 'पर्पिकः' इति साध्यताम् ।

(२) (तदाहेति माशब्दादिभ्य उपसंख्यानम्) इतिवार्तिकस्यार्थं प्रदर्श्योदाहरणं च प्रस्तोतव्यम् ।

(३) श्वगणेन चरति, अक्षैर्दीव्यति, धनुषा जीवति, धर्मं चरति, समाजं रक्षति, अपूप भक्षणं शीलमस्येति विग्रहेषु कानि कानि रूपाणि जायन्ते ?

(४) 'नौद्व्यचष्ठन्' इति सूत्रस्योदाहरणद्वयं दर्शयत ।

(५) अधोदत्त प्रयोगान्विवेक्ष्य समुचित वाक्यरचना कार्या,
श्वागणिकः, औडुपिकः, मारीचिकम्, वैतनिकः, वैवधिकः, दार्दुरिकः, मार्दङ्गिकः ।

(६) अधस्तन सूत्राणामर्थमुदाहरणं च लिखत
संस्कृतम्, लवणाल्लुक्, पक्षिमत्स्यमृगान्हन्ति ।

(७) 'अस्ति नास्ति दिष्टं मतिः' अस्य सूत्रस्यार्थं विलिख्योदाहरणानि देयानि।

(८) आकरिकः– इति प्रयोगः कथं सिध्यति ?

# अथ यदधिकारः

**प्राग्घिताद्यत् ४।४।७५**

तस्मै हितमित्यतः प्राग् यदधिक्रियते ।

**तद्वहति(१) रथ–युग–प्रासङ्गम् ४।४।७६**

रथं वहति – रथ्यः । युग्यः (२) । प्रासङ्ग्यः (३) ।

**धुरो यड्ढकौ ४।४।७७**

धुर्यः, धौरेयः ।

**हलसीराट्ठक् ४।४।८१**

हलं वहति– हालिकः । सैरिकः ।

**विध्यत्यधनुषा ४।४।८३**

द्वितीयान्ताद् विध्यतीत्यर्थे यत् न चेत् तत्र धनुष्करणम् । पादौ विध्यन्ति – पद्याः (४) शर्कराः ।

**नौ(५)–वयो–धर्म–विष–मूल–मूल-सीता-तुलाभ्य–स्तार्य–तुल्य–प्राप्य-बध्यानाम्य–सम-समित-संमितेषु ४।४।९१**

नावा तार्यं – नाव्यं जलम् । वयसा तुल्यो – वयस्यः । धर्मेण प्राप्यं – धर्म्यम् । विषेण वध्यो – विष्यः । मूलेन आनाम्यं – मूल्यम् । मूलेन समो – मूल्यः । सीतया समितं – सीत्यम् = क्षेत्रम् । तुलया संमितं – तुल्यम् ।

**तत्र साधुः ४।४।९८**

अग्रे साधुः– अग्र्यः । सामसु साधुः– सामन्यः । कर्मण्यः । शरण्यः ।

---

(१) द्वितीयान्तेभ्यो रथ–युग–प्रासङ्ग शब्देभ्यो वहतीत्यर्थे यत्स्यादित्यर्थः ।

(२) युगं वहति– युग्यः = वृषभः, अश्वो वा । रथादिवहनकाले वृषादिस्कन्धेषु तिर्यग् यदीषत् प्रोतं काष्ठमासज्यते तद्युगम् ।

(३) प्रासङ्गं वहति – प्रासङ्ग्यः । अश्वादीनां रथादिवहने शिक्षितीकरणार्थं युगे यद् युगान्तरमासज्यते तत् प्रासङ्गम् ।

(४) 'पद्यत्यतदर्थे' इति पदादेशः ।

(५) नावादिभ्यस्तृतीयान्तेभ्यः क्रमेण तार्यादिष्वर्थेषु यत् प्रत्ययः स्यादित्यर्थः ।

**सभायाय: ४।४।१०५**

सभ्य: ।

## ।। इति यतोऽवधिः ।।

**प्रश्न १. रथ्यः– इत्यत्र केन सूत्रेण कः प्रत्ययो भवति ?**

उ०– रथ्यः– इत्यत्र रथं वहतीति विग्रहे द्वितीयान्ताद् रथशब्दात् 'तद्वहति रथ–युग–प्रासङ्गम्' इति यत्प्रत्ययेऽकारलोपे रूपं निष्पद्यते ।

**प्रश्न २ धुर्यः, पद्या शर्कराः, वयस्यः, शरण्यः एषु विग्रहः प्रदर्श्यताम्**

उ०– धुरं वहति = धुर्यः, पादौ विध्यन्ति पद्याः शर्कराः वयसा तुल्यो = वयस्यः, शरणे साधुः = शरण्यः ।

### अभ्यासार्थं प्रश्नाः

(१) 'प्राग्घिताद्यत्' – अस्यार्थो लेख्यः ।

(२) युग्यः, सैठिकः, धर्म्यम्, कर्मण्यः एते प्रयोगाः साध्यन्ताम् ।

(३) सभ्य इति प्रयोगः कथं सिध्यति ?

# अथ छयतोरधिकारः

**प्राक् क्रीताच्छः ५।१।१**

तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते।

**उ- गवादिभ्यो यत् ५।१।२**

प्राक् क्रीतादित्येव। उवर्णान्ताद्गवादिभ्यश्च यत् स्यात्। छस्यापवादः। (**नाभि** (१) **नभं च**) नभ्योऽक्षः (२)। नभ्यमञ्जनम्। रथनाभावेवेदम् (३)। (**शुनः संप्रसारणं वा च दीर्घत्वम्**) शून्यम्, शुन्यम्। (**ऊधसोऽनङ च**) ऊधन्यः।

**कम्बलाच्च संज्ञायाम् ५।१।३**

यत्। कम्बल्यमूर्णापलशतम्। संज्ञायां किम्? कम्बलीया ऊर्णा।

**विभाषा हविरपूपादिभ्यः ५।१।४**

आमिक्ष्यं दधि, आमिक्षीयम्। पुरोडाश्यास्तण्डुलाः, पुरोडाशीयाः। अपूप्यम्। अपूपीयम्।

**तस्मै हितम् ५।१।५**

वत्सेभ्यो हितो वत्सीयो गोधुक्। शङ्कव्यं दारु। गव्यम्। हविष्यम्।

**शरीरावयवाद्यत् ५।१।६**

दन्त्यम्। कण्ठ्यम्। नस्यम्।

**अजाविभ्यां थ्यन् ५।१।८**

अजथ्या यूथिः। अविथ्या।

---

(१) नाभिशब्दो नभादेशं, यत्प्रत्ययं च प्राप्नोतीत्यर्थः। गवादिगणसूत्रमिदम्।

(२) यत्र अक्षदण्डः प्रवेश्यते तच्च क्रमध्यगतं छिद्रं नाभिरुच्यते, तस्मै हितोऽक्षदण्डो नभ्यः। स हि अनुगुणत्वात् नाभये हितः। नभ्य मञ्जनम्, अञ्जनं=तैलसेकः। नाभेरञ्जने कृते तत्र प्रोतं चक्रं सुपरिवर्तं भवति इति परिवर्तनात्मक कार्यक्षमताऽऽधायकत्वा दञ्जनं नाभये हितम्।

(३) शरीरावयवविशेषवाचि नाभिशब्दात्तु 'शरीरावयवाद्यत्' इति यत् केवलो भवति नतु नभादेशः।

**आत्मन् विश्वजन–भोगोत्तरपदात् खः ५।१।६**

**आत्माध्वानौ खे ६।४।१६९**

प्रकृत्या स्तः । आत्मने हितम् – आत्मनीनम् । विश्वजनीनम् । कर्मधारयादेवेष्यते । अन्यत्र विश्वजनीयम् । (पञ्चजनादुपसंख्यानम्) । पञ्चजनीनम् । 'कुमति च' इति णः । मातृभोगीणः । (आचार्यादणत्वं च) । आचार्य भोगीनः ।

## ।। इति छयतोः पूर्णोऽवधिः ।।

### अभ्यासः

**प्रश्न १. नभ्योऽक्षः–इति प्रयोगः साध्यः**

उ० – नाभये हित इति विग्रहे चतुर्थ्यन्तनाभिशब्दात् 'नाभिनभं च' इति वार्तिकेन यत्प्रत्यये नाभेर्नभादेशे च नभ्योऽक्ष इति रूपं साधु ।

**प्रश्न २. आत्मनीनमित्यस्य साधुत्वप्रकारो दर्शनीयः**

उ० – आत्मने हितमिति विग्रहे चतुर्थ्यन्तादात्मन् शब्दात् 'आत्मन्विश्वजन–भोगोत्तरपदात्खः' इति खप्रत्यये खस्येनादेशे 'नस्तद्धिते' इति टिलोपे प्राप्ते आत्मा ध्वानौ खे' इति प्रकृति भावे स्वादौ नपुंसकत्वे रूपं साधु ।

### अभ्यासार्थं प्रश्नाः

(१) ऊ धन्य इति प्रयोगः साध्यताम् ।

(२) 'तस्मै हितम्' अस्य सूत्रस्य सोदाहरणमर्थं लिखत ।

(३) नस्यमिति कथं सिध्यति ?

(४) पञ्चजनीनमिति प्रयोगं साधयित्वा वाक्ये प्रयुज्यताम् ।

# अथ ठञाधिकारः

**प्राग्वतेष्ठञ् ५।१।१८**

तेन तुल्यमित्यतः प्राक् ठञाधिक्रियते ।

**आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ५।१।१९**

तदर्हतीत्यं तदभिव्याप्य ठञाधिकारमध्ये ठञोऽपवादष्ठगधिक्रियते गोपुच्छादीन्वर्जयित्वा ।

**असमासे निष्कादिभ्यः ५।१।२०**

आर्हादित्ये तत्तेन क्रीतमिति यावदनुवर्तते । निष्कादिभ्योऽसमासे ठगार्हीयेष्वर्थेषु । निष्केण क्रीतमिति–नैष्किकम् । समासे तु ठञ् ।

**परिमाणान्तस्यासंज्ञाशाणयोः ७।२।१७**

उत्तरपदवृद्धिर्ञ्णिदादौ । परमनैष्किकम् ।

**शताच्च ठन्–यतावशते ५।१।२१**

शतिकम्, शत्यम् । अशते किम् ?

**संख्याया अतिशदन्तायाः कन् ५।१।२२**

आर्हीयेऽर्थे । शतं परिमाणमस्य–शतकः सङ्घः । बहुकः । त्यन्तायास्तु साप्ततिकः । शदन्तायाः –चात्वारिंशत्कः ।

**वतोरिड्वा ५।१।२३**

वत्वन्तात्कन इड्वा । तावतिकः, तावत्कः ।

**कंसाट्टिठन् (१) ५।१।२५**

कंसिकः । (अर्धाच्च) अर्धिकः ।

**अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम् ५।१।२८**

अध्यर्धपूर्वाद् द्विगोश्च परस्यार्हीयस्य लुक् । अध्यर्धकं सम् (२) । संज्ञायां तु–पाञ्चकपालिकम् ।

---

(१) टिठन्, टकारः टित्वात् स्त्रियां ङीबर्थः । इकार उच्चारणार्थः, ठन् इत्येव शिष्यते । कंसेन क्रीतः=कंसिकः । अर्धेन क्रीतः=अर्धिकः ।

(२) अध्यारूढम् अर्धं यस्मिन् तदध्यर्धम् 'प्रादिभ्यो धातुजस्य' बहुव्रीहौ पूर्वखण्डे उत्तरपदस्य लोपः । सार्धमित्यर्थः । अध्यर्धेन कंसेन क्रीतमिति विग्रहः तद्धितार्थे द्विगुः । संख्याया ····इति कन् तस्यानेन लुक् ।

### तेन क्रीतम् ५।१।३७

ठञ् । गौपुच्छेन क्रीतं–गौपुच्छिकम् । साप्ततिकम् । ठक्–नैष्किकम् ।

### तस्येश्वरः ५।१।४२

सर्वभूमिपृथिवीभ्यामणञौ स्तः । 'अनुशतिकादीनां चे' ति वृद्धिः । सर्वभूमेरीश्वरः–सार्वभौमः । पार्थिवः ।

### तदस्य परिमाणम् ५।१।५७

प्रस्थः परिमाणमस्य–प्रास्थिको राशिः । (स्तोमे डविधिः) पञ्चदश मन्त्राः परिमाणमस्य–पञ्चदशः । सप्तदशः । सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुतिः=स्तोमः ।

### पङ्क्ति-विंशति-त्रिंशच्चत्वारिंशत्-पञ्चाशत् षष्ठि-सप्तत्यशीति-नवति-शतम् ५।१।५९

एते रूढिशब्दा निपात्यन्ते (१) ।

### तदर्हति ५।१।६३

श्वेतच्छत्रमर्हति–श्वैतच्छत्रिकः ।

### दण्डादिभ्यो यत् ५।१।६६

एभ्यो यत् । दण्डमर्हति–दण्ड्यः । अर्घ्यः । वध्यः ।

### तेन निर्वृत्तम् ५।१।७९

अह्ना निर्वृत्तमाह्निकम् ।

## ॥ इति ठञ्ठकोरवधिः ॥

---

(१) तदस्य परिमाणम् इत्यर्थे इति शेषः । पञ्च पादाः परिमाणमस्येत्यर्थे पञ्चन् शब्दात् तिप्रत्ययः, प्रकृतेष्टिलोपः, चकारस्य कुत्वम्, अनुस्वारपरसवर्णौ पङ्क्तिः = दशाक्षरपादविशिष्टश्छन्दोविशेषः । दशानां वर्गो दशत्, 'पञ्चदशतौवर्गे, इत्युक्तेः, द्वौ दशतौ परिमाणमस्य सङ्घस्येति=विंशतिः, शतिच् प्रत्ययः प्रकृते विन्भावः, नस्यानुस्वारः । त्रयो दशतः परिमाणमस्य सङ्घस्येति=त्रिंशत्, शत्प्रत्ययः, प्रकृतेः त्रिन् भावः । चत्वारो दशतः परिमाणमस्य सङ्घस्येति=चत्वारिंशत्, शत् प्रत्ययः प्रकृतेः चत्वारिन् भावः । पञ्चदशतः परिमाणमस्य सङ्घस्येति=पञ्चाशत्, शत् प्रत्ययः प्रकृतेः पञ्चादेशः । षड् दशतः परिमाणमस्य सङ्घस्येति=षष्टिः, तिप्रत्ययः, प्रकृतेः षष्, जस्त्वाभावश्च । सप्त दशतः परिमाणमस्य सङ्घस्येति=सप्ततिः, तिप्रत्ययः, प्रकृतेः, सप्ता देशः । अष्टौ दशतः परिमाणमस्येति=अशीतिः तिप्रत्ययः प्रकृतेः 'अशी' इत्यादेशः । नव दशतः परिमाणमस्येति=नवतिः तिप्रत्ययः, प्रकृतेर्नवादेशः । दश दशतः परिमाणमस्य सङ्घस्येति=शतम्, तप्रत्ययः प्रकृतेः शादेशश्च ।

## अभ्यासः

प्रश्न १. निष्केण क्रीतम्, शतेन क्रीतम्, गोपुच्छेन क्रीतम्—इति विग्रहेषुसम्पत्स्यमान रूपाणि लिखत ।

प्रश्न २. पार्थिव इति प्रयोगः साध्यताम्

उ०— पार्थिव इत्यत्र पृथिव्या ईश्वर इति विग्रहे षष्ठयन्तात्पृथिवीशब्दात् 'तस्येश्वरः' इति अञ् प्रत्यये आदिवृद्धौ 'यस्येतिचे ती' कारलोपे स्वादौ रूपं साधु ।

प्रश्न ३. अर्घ्य इति संसाध्य वाक्ये प्रयुज्यताम्

उ०— अर्धमर्हतीति विग्रहे द्वितीयान्तादर्घशब्दात् 'दण्डादिभ्यो यत्' इति यत् प्रत्ययेऽनुबन्धलोपे 'यस्येतिचे'त्यकारलोपे अर्घ्य इति रूपं सिध्यति, वाक्ये प्रयोगो यथा— रघुरर्घ्यं वरतन्तुशिष्यं कौत्सं पर्यपूपुजत् ।

## अभ्यासार्थं प्रश्नाः

(१) परमनैष्किकम्— इत्यत्र साधुत्वप्रकारः प्रदर्श्यताम् ।

(२) बहुकः, कंसिकः, अध्यर्धकंसम् एते प्रयोगाः सूत्रनिर्देशपूर्वकं साधनीयाः ।

(३) सार्वभौम इत्यत्र केन सूत्रेण कः प्रत्ययो भवति ?

(४) 'तेन निर्वृत्तम्' इति सूत्रास्यार्थं निर्दिश्योदाहणञ्च लेख्यम् ।

(५) 'श्वेतच्छत्रिक' इति कथं सिध्यति ?

# अथ भावकर्मार्थाः

## तेन तुल्यं (१) क्रिया चेद्वतिः ५।१।११५

ब्राह्मणेन तुल्यं-ब्राह्मणवत् (२) अधीते। क्रियाचेत् किम् ? गुणतुल्ये माभूत्-पुत्रेण तुल्यः स्थूलः।

## तत्र तस्येव ५।१।११६

मथुरायामिव–मथुरावत् स्रुघ्ने प्राकाराः। चैत्रस्येव चैत्रवत् मैत्रवत् मैत्रस्य गावः।

## तस्य भावस्त्वतलौ ५।१।११९

प्रकृतिजन्यबोधे (३) प्रकारो भावः। गोर्भावः गोत्वम्। गोता। त्वान्तं क्लीबम्। तलन्तं स्त्रियाम्।

## आ च त्वात् ५।१।१२०

'ब्रह्मणस्त्व' इत्यतः प्राक् त्व–तलावधिक्रियेते। अपवादः (४) सह समावेशार्थः। स्त्रिया भावः–स्त्रैणम्, स्त्रीत्वम्, स्त्रीता। पौंस्नम्, पुंस्त्वम्, पुंस्ता।

## पृथ्वादिभ्य इमनिज्वा ५।१।१२२

वा वचनमणादिसमावेशार्थत्वम् (५)।

## र ऋतो हलादेर्लघोः ६।४।१६१

इष्ठेमेयस्सु।

---

(१) तृतीयान्तात्तुल्यमित्यर्थे वति प्रत्ययः स्यात्, यत् तुल्यं सा चेत् क्रियेत्यर्थः। तुल्या क्रियेत्यर्थे वतिः स्यादिति यावत्।

(२) ब्राह्मणकर्तृकाध्ययनतुल्यं क्षत्रियकर्तृकाध्ययनमिति बोधः।

(३) त्व–तल प्रकृतिभूत–गवादि शब्देभ्यो जायमाने गोव्यक्त्यादिबोधे प्रकारो = विशेषणं = जात्यादिकं भावः = भावशब्देन विवक्षित इत्यर्थः, यथा गोशब्दाद् व्यक्तिबोधे जायमाने गोत्वं (जातिः) विशेषणत्वेन भासमनं भावः।

(४) अनुवृत्त्यैव सिद्धे 'पृथ्वादिभ्य इमनिज्' इत्यादि विहितैः इमनिजादिभिरपवादैरनयोर्बाधो मा भूदित्येवमर्थोऽधिकारः। तेन तैः सहास्य समुच्चयः सिध्यति। प्रथिमा पृथुत्वमिति।

(५) पृथु–मृदुप्रभृतिषु 'इगन्ताच्च लघुपूर्वात्' इत्यणः चण्ड–खादिषु गुणवचनलक्षणस्य ष्यञः, बालवत्सादिषु वयोवचनलक्षणस्य–अञश्च औत्सर्गिकस्य समावेशार्थमित्यर्थः। अन्यथा विभाषावशादपवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते, इति 'पारे मध्ये षष्ठ्या वा' इति सूत्र भाष्ये सिद्धान्तितत्वादिमनिच्–त्व– तलाभावेऽणादीनां प्रवृत्तिर्नस्यादिति भावः।

टेः ६।४।१४३

भस्य टेर्लोप इष्ठेमेयस्सु। पृथु–मृदु भृश–कृश–दृढ–परिवृढानामेव रत्वम्। पृथोर्भावः = प्रथिमा पार्थवम्। म्रदिमा मार्दवम्।

वर्ण– दृढादिभ्यः ष्यञ् च ५।१।१२३

चादिमनिच्। शौक्ल्यम्, शुक्लिमा। दार्ढ्यम् द्रढिमा।

गुणवचन–ब्राह्मणादिभ्यः कर्मणि च ५।१।१२४

चाद्भावे। जडस्य भावः कर्म वा = जाड्यम्। ब्राह्मण्यम्। आकृतिगणोऽयम्। (चतुर्वर्णादीनां (१) स्वार्थे उपसंख्यानम्) चातुर्वर्ण्यम् (२)। चातुराश्रम्यम्। त्रैवर्ग्यम्। षाड्गुण्यम्। सैन्यम्। सान्निध्यम्। औपम्यम्। त्रैलोक्यमित्यादि।

स्तेनाद्यन्नलोपश्च ५।१।१२५

नेति संघात ग्रहणम् (३)। स्तेनस्य भावः कर्म वा= स्तेयम्।

सख्युर्यः ५।१।१२६

सख्यम्।

कपि– ज्ञात्योर्ढक् ५।१।१२७

कापेयम्। ज्ञातेयम्।

पत्यन्तपुरोहितादिभ्यो यक् ५।१।१२८

सैनापत्यम्। पौरोहित्यम्। (राजाऽसे) राजन्‌शब्दोऽसमासो यकं लभते इत्यर्थः। राज्ञो भावः कर्म वा राज्यम्। समासे तु ब्राह्मणादित्वात् ष्यञ्। आधिराज्यम् (४)।

प्राणभृज्जाति–वयोवचनाद्गात्रादिभ्योऽञ् ५।१।१२९

प्राणभृज्जातिः– आश्वम्। वयोवचनम्– कौमारम्। औद्गात्रम्। औन्नेत्रम्। सौष्ठवम्।

---

(१) चतुर्वर्णादि गणपठितानां शब्दानां स्वार्थे ष्यञ् वक्तव्य इत्यर्थः।

(२) चत्वारो वर्णाः= चातुर्वर्ण्यम्। एवं चत्वार आश्रमाः= चातुराश्रम्यम् इत्यादि। चतुर्वर्ण, चतुराश्रम, सर्वविद्य, त्रिलोक, त्रिस्वर, षड्गुण, सेना, अनन्तर, संनिधि, समीप, उपमा, सुख, तदर्थ, इतीह, मणिक इति चतुर्वर्णादिः।

(३) नकाराऽकारसमुदायग्रहणमित्यर्थः।

(४) अधिको राजा= अधिराज प्रादि समासे टचि रूपम्। अधिराजस्य भावः कर्म वा– आधिराज्यम्।

हायनान्तयुवादिभ्योऽण् ५।१।१३०

द्वैहायनम् । त्रैहायनम् । यौवनम् । स्थाविरम् (श्रोत्रियस्य यलोपश्च) । श्रौत्रम् । कुशल-निपुण – चपल – पिशुन – कुतूहल – क्षेत्रज्ञाः– युवादिषु ब्राह्मणादिषु च पठचन्ते । कौशलम् कौशल्यमित्यादि ।

इगन्ताच्च लघुपूर्वात् ५।१।१३१

शुचेर्भावः कर्म वा–शौचम् । मुनेर्भावः कर्म वा–मौनम् ।

योपधाद्गुरुपोत्तमाद्वुञ् (१) ५।१।१३२

रामणीयकम् । आभिधानीयकम् । (सहायाद्वा) । साहायकम्, साहाय्यम् ।

द्वन्द्वमनोज्ञादिभिश्च ५।१।१३३

शैष्योपाध्यायिका । मानोज्ञकम् ।

॥ इति नञ्स्नञोरवधिः ॥

अभ्यासः

प्रश्न १. मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः– इत्यत्र वतिप्रत्यय विधायक सूत्रं लेख्यम्

उ०– मथुरायामिवेति विग्रहे सप्तम्यन्तान्मथुराशब्दात् इवार्थे 'तत्र तस्येवे' ति वति प्रत्यये मथुरावत् इति रूपम् ।

प्रश्न २. प्रथिमा इति प्रयोगस्य सिद्धिप्रकारो वर्णनीयः

उ०– प्रथिमा–इत्यत्र पृथोर्भाव इति विग्रहे 'पृथ्वादिभ्य इमनिज्वा' इति विकल्पेन इमनिच्प्रत्यये पृथु+इमन् इति जाते 'र ऋतो हलादेर्लघोः' इति ऋकारस्य रकारादेशे 'टेः' इति टिलोपे प्रथिमन् शब्दात् पुंस्त्वे स्वादिकार्ये रूपं साधुः । इमनिचोऽभावे 'इगन्ताच्च लघुपूर्वात्' इत्यणि 'आदिवृद्धौ 'ओर्गुणः' इति गुणे पार्थवमिति निष्पन्नम् ।

प्रश्न ३. चातुर्वर्ण्यमित्यत्र केन सूत्रेण कस्मिन्नर्थे कः प्रत्यय भवतीति निर्दिश्यताम्

उ०– चातुर्वर्ण्यमित्यत्र चत्वारो वर्णा इति विग्रहे चतुर्वर्णशब्दात् 'चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्' इति वार्तिकेन स्वार्थे ष्यञ्प्रत्यये 'तद्धितेष्वचामादेरि'त्यादिवृद्धौ 'यस्ये'ति चे' त्यलोपे रूपं साधु ।

---

(१) योपधात् गुरुपोत्तमात्प्रातिपदिकात्षष्ठचन्ताद् भावे कर्मणि चार्थे वुञ् स्यादित्यर्थः ।

## अभ्यासार्थं प्रश्नाः

(१) पुंसो भाव इति विग्रहे 'पौंस्नम्' इति रूपं कथं जायते लिखत ।

(२) म्रदिमा, मार्दवमिति रूपद्वयं साध्यम् ।

(३) स्तेयमिति प्रयोगः साध्यताम् ।

(४) **अधस्तन सूत्राणां सोदाहरणमर्थो लिख्यताम्**
'वर्ण–दृढादिभ्यः ष्यञ् च', 'इगन्ताच्च लघुपूर्वात्', 'द्वन्द्वमनोज्ञादिभ्यश्च' ।

(५) **अधस्तनपदानामर्थं विलिख्य वाक्ये प्रयुज्यताम्**
गोता, जाड्यम्, त्रैलोक्यम् सख्यम्, पौरोहित्यम् ।

# अथ पाञ्चमिकेषु भवनाद्यर्थकाः

**धान्यानां (१) भवने क्षेत्रे खञ् ५।२।१**

मुद्गानां भवनं क्षेत्रं = मौद्गीनम् ।

**व्रीहिशाल्योर्ढक् ५।२।२**

व्रैहेयम् । शालेयम् ।

**यव– यवक– षष्टिकाद्यत् ५।२।३**

यव्यम् । यवक्यम् । षष्टिक्यम् ।

**विभाषा तिल– माषोमा– भङ्गाणुभ्यः ५।२।४**

यत् । पक्षे खञ् । तिल्यम्, तैलीनम् । माष्यम्, माषीणम् । उम्यम्, औमीनम् । भङ्ग्यम्, भाङ्गीनम् । अणव्यम्, आणवीनम् ।

**तत्सर्वादेः पथ्यङ्ग–कर्म–पत्र–पात्रं व्याप्नोति ५।२।७**

सर्वादेः पथ्याद्यन्तात् द्वितीयान्तात्खः । सर्वपथान् व्याप्नोति= सर्वपथीनः । सर्वाङ्गीणः । सर्वकर्मीणः । सर्वपत्रीणः । सर्वपात्रीणः ।

**हैयङ्गवीनं संज्ञायाम् ५।२।२३**

ह्योगोदोहशब्दस्य हियङ्गुरादेशो विकारेऽर्थे खञ् प्रत्ययश्च निपात्यते संज्ञायामित्यर्थः । दुह्यते–इति दोहः = क्षीरम्, ह्योगोदोहस्य विकारः– हैयङ्गवीनम्= नवनीतम् ।

**तस्य पाकमूले पील्वादि(२) – कर्णादिभ्यः कुणब्–जाहचौ ५।२।२४**

पीलूनां पाकः–पीलुकुणः । कर्णस्य मूलं–कर्णजाहम् ।

**पक्षात्तिः ५।२।२५**

मूले इत्यनुवर्तते । पक्षस्य मूलं–पक्षतिः ।

---

(१) भवन्त्यस्मिन्निति भवनम्= उत्पत्ति स्थानम् । षष्ठ्यन्ताद् धान्यवाचकात् शब्दाद् भवनं क्षेत्रमित्यर्थे खञ् स्यादिति सूत्रार्थः ।

(२) षष्ठ्यन्तेभ्यः पील्वादिभ्यः पाकेऽर्थे 'कुणप्' प्रत्ययः, कर्मादिभ्यस्तु मूलेऽर्थे 'जाहच्' प्रत्ययः स्यादित्यर्थ. ।

**तेन वित्तश्चुञ्चुप् (१) चणपौ ५।२।२६**

यकारः (२) प्रत्यययोरादौ लुप्तनिर्दिष्टः, तेन षस्य नेत्वम्। विद्यया वित्तो=विद्याचुञ्चुः, विद्याचणः।

**वेः शालच्छंकटचौ ५।२।२८**

क्रियाविशिष्टसाधनवाचकात्स्वार्थे। (**विस्तृतम्**) विशालम्। विशङ्कटम्।

**संप्रोदश्चकटच् ५।२।२९**

सङ्कटम्। प्रकटम्। उत्कटम्। चाद् विकटम्। (**अलाबूतिलोमाभङ्गाभ्यो रजस्यूपसंख्यानम्**) अलाबूनां रजोऽलाबूकटम्। तिलकटम् (**गोष्ठजादयः स्थानादिषु पशुनामभ्यः**) गवां स्थानं=गोष्ठम्। (**सङ्घाते कटच्**) अवीनां सङ्घातोऽविकटः। (**विस्तारे पटच्**) अविपटः। (**द्वित्वे गोयुगच्**) द्वावुष्ट्रौ=उष्ट्रगोयुगम्।(**षट्त्वे षड्गवच्**) अश्वषड्गवम् (३)। (**स्नेहे तैलच्**) तिलतैलम्। सर्षपतैलम्।

**अवात्कुटारच्च ५।२।३०**

चात्कटच्। अवकुटारः, अवकटः।

**नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ५।२।३१**

अवादित्येव। नतं=नमनम्। नासिकाया नतम्–अवटीटम्, अवनाटम्, अवभ्रटम्। तद्योगान्नासिकावटीटा। पुरुषोऽवटीटः।

**उपाधिभ्यां त्यकन्नासन्नारूढयोः ५।२।३४**

पर्वतस्यासन्नं स्थलं=उपत्यका। आरूढंस्थलमधित्यका।

**कर्मणिघटोऽठच् (४) ५।२।३५**

कर्मणिघटते=कर्मठः।

---

(१) तृतीयान्तात्समर्थात् वित्त इत्यर्थे चुञ्चुप्–चणपौ भवतः, इत्यर्थः। वित्तः=प्रसिद्धः।

(२) ननु 'चुञ्चुप्' प्रत्ययस्य, 'चणप्' प्रत्ययस्य चादिश्चकारः 'चुटू' इति सूत्रेण इत्संज्ञः स्यादिति चेदत्रोच्यते–यकारः प्रत्यययोरादौ, इति। अयमर्थः– उभयत्रादौ यकारोऽस्तीति 'य्चुञ्चुप्' 'यचणप्' प्रत्ययौ स्तः। 'लोपो व्योर्वली' ति यलोप., तेन चकारस्य प्रत्ययादित्वाभावान्नेत्वं लोपश्चेति।

(३) षड् अश्वाः=अश्वषड्गवम्।

(४) सप्तम्यन्तात् कर्मन् शब्दाद् घटे=घटमानेऽर्थे अठच् प्रत्ययः स्यादित्यर्थः।

**तदस्य सञ्जातं तारकादिभ्य (१) इतच् ५।२।३६**

तारका: सञ्जाता अस्य=तारकितं नभः (२) । पण्डितः । आकृतिगणोऽयम् ।

**प्रमाणे द्वयसज्-दघ्नञ्-मात्रचः (३) ५।२।३७**

ऊरू प्रमाणमस्य=उरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रम् ।

**प्रथमश्च द्वितीयश्च (४) ऊर्ध्वमाने मतौ मम ।**

**ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।**

**आयामस्तु प्रमाणं स्यात् संख्याबाह्या तु सर्वतः ॥**

**पुरुषहस्तिभ्यामण् च ५।२।३८**

पुरुषः प्रमाणमस्य=पौरुषम्, पुरुषद्वयसम् । हास्तिनम्, हस्तिद्वयसम् ।

**यत्तदेतेभ्यः परिमाणे वतुप् ५।२।३९**

यत्परिमाणमस्य=यावान् । तावान् । एतावान् ।

**किमिदंभ्यां वो घः ५।२।४०**

आभ्यां वतुब्वस्य च घः ।

**इदंकिमोरीश्-की ६।३।९०**

दृग्दृश्वतुषु । कियान् (५) । इयान् (६) ।

---

(१) प्रथमान्तेभ्यस्तारकादिभ्यः तदस्य सञ्जातमित्यर्थे इतच् प्रत्ययः स्यादित्यर्थः ।

(२) सदसद्विवेकिनी बुद्धिः पण्डा, सा सञ्जाता अस्येति=पण्डितः ।

(३) प्रथमान्तादस्य प्रमाणमित्यर्थे उक्तत्रयः प्रत्ययाः स्युरित्यर्थः ।

(४) विशेषं दर्शयितुमाह–प्रथमश्चेति । प्रथमः=द्वयसच् प्रत्ययः, द्वितीयश्च=दघ्नञ् प्रत्ययश्चेति द्वौ प्रत्ययौ ऊर्ध्वमाने मतौ । तत्र किमूर्ध्वमानमित्याह–ऊर्ध्वमानं किल उन्मानम्=ऊर्ध्वं प्रमाणमित्यर्थः । सर्वतः प्रमाणं तु परिमाणमुच्यते । आयामः=दैर्घ्यं तु प्रमाणम् उच्यते । संख्या तु सर्वपरिमाणेभ्यो बाह्या बोध्या इत्यर्थः । सूत्रे प्रमाणशब्दस्तु परिच्छेदकमात्रपर इति ध्येयम् ।

(५) कियान् इत्यत्र किम्परिमाणमस्येति विग्रहः । वतुप् प्रत्यये वस्य घकारे घस्य 'इय्' आदेशे, किम्+इयत् इति स्थिते किमः की–भावे 'यस्येति चेती' कारलोपे सौ विभक्तौ 'अत्वन्तस्ये' ति दीर्घे 'उगिदचामि' ति नुमि रूपम् ।

(६) इदं परिमाणमस्य–'इयान् ।' अत्र सर्वस्य इदम ईशादेशे ईकारलोपे च 'इयत्' इति प्रत्ययमात्रमेवावशिष्यते, सौ नुमादि पूर्ववत् ।

**किमः संख्यापरिमाणे डति च ५।२।४१**

चाद्वतुप् तस्य च घः । का संख्यायेषां ते—कति, कियन्तः ।

**संख्याया अवयवे तयप् ५।२।४२**

पञ्च अवयवा अस्य—पञ्चतयम् ।

**द्वित्रिभ्यां तयस्यायज्वा ५।२।४३**

द्वयम्, द्वितयम् । त्रयम्, त्रितयम् ।

**उभादुदात्तो नित्यम् ५।२।४४**

उभशब्दात्तयपोऽयच् स्यात् स चाद्युदात्तः । उभयम् ।

## ॥ इति भवनाद्यर्थकाः ॥

### अभ्यासः

**प्रश्न १. तिल्यमिति प्रयोगः साध्यताम्**

उ० – तिल्यमित्यत्र तिलानां भवनं क्षेत्रमिति विग्रहे षष्ठ्यन्तात् तिलशब्दात् 'विभाषा तिल–माषोमा–भङ्गाणुभ्यः' इति विकल्पेन यत् प्रत्ययेऽकारलोपे तिल्यमिति, पक्षे 'धान्यानां भवने क्षेत्रे खञ्' इति खञि खस्येनादेशे आदिवृद्धौ तैलीनमिति रूपद्वयं साधु ।

**प्रश्न २. हैयङ्गवीनमितिप्रयोगः कथं निष्पद्यते**

उ० – ह्यः=पूर्वेद्युः उत्पन्नो गोदोहः=गोपयः इति ह्योगोदोहशब्दो निष्पद्यते ह्योगोदोहस्य विकार इति विग्रहे तस्मात् 'हैयङ्गवीनं संज्ञायाम्' इति विकारेर्थे निपातनात् खञ् प्रत्यये ह्योगोदोहस्य 'हियङ्गु' इत्यादेशे च हियङ्गु+ख इति जाते खस्येनादेशे ञित्वादादिवृद्धौ 'ओर्गुणः' इति गुणेऽवादेशे हैयङ्गवीनमिति साधु ।

**प्रश्न ३. द्वयम्, द्वितयमिति रूपद्वयं साध्यम्**

उ० – द्वौ अवयवौ अस्येति विग्रहे द्विशब्दात् 'संख्याया अवयवे तयप्' इति तयपि 'द्वित्रिभ्यां तयस्यायज्वा' इति विभाषया तयपोऽयजादेशेऽनुबन्धलोपे 'यस्येति चे' तीकारलोपे द्वयम्, अयजभावेद्वितयमिति रूपद्वयं साधु ।

### अभ्यासार्थं प्रश्नाः

(१) शालेयमिति रूपं कथं सिध्यति ?

(२) **पक्षतिः, विद्याचुञ्चुः, तिलकटम्, पण्डितः, कति एतेषां विग्रहः प्रदर्शनीयः ।**

(३) **विशेष सूत्रं प्रदर्श्याधस्तन प्रयोगाः साध्यन्ताम्**
यव्यम्, विद्याचणः, सर्वाङ्गीणः, कर्मठ, कियान् ।

(४) अधित्यका–इत्यस्य साधुत्वं वर्णयत ।

(५) ननु 'तेन वित्तश्चुञ्चुप्–चणपौ' इत्यत्र चुञ्चुप्–चणप्–प्रत्यययोरादि भूतचकारस्य 'चुट' इतीत्संज्ञा कथं न भवतीति शङ्कामुद्भाव्य समाधीयताम् ।

# अथ मत्वर्थीयाः

**तदस्मिन्नधिकमिति दशान्ताड्डः ५।२।४५**

एकादश अधिका अस्मिन्नेकादशम् । (**शत-सहस्रयोरेवेष्यते**) नेह एकादशाऽधिका अस्यां विंशत्यम् । 'प्रकृतिप्रत्ययार्थयोः समानजातीयत्व एवेष्यते ।' नेह, एकादश माषा अधिका अस्मिन् सुवर्णशते ।

**शदन्तविंशतेश्च ५।२।४६**

डः स्यादुक्तेऽर्थे । त्रिंशदधिका अस्मिन्–त्रिंशम् । विंशम् ।

**तस्य पूरणे डट् ५।२।४८**

संख्याया इत्येव । एकादशानां पूरणः एकादशः ।

**नान्तादसंख्यादेर्मट् ५।२।४९**

डटो मडागमः । पञ्चानां पूरणः पञ्चमः । नान्तात्किम् ? विंशः । असंख्यादेः किम् ? एकादशः ।

**षट्–कति–कतिपयचतुरां थुक् ५।२।५१**

डटि । षण्णां पूरणः– षष्ठः । कतिथः । कतिपय–शब्दस्यासंख्यात्वेऽपि, अत एव ज्ञापकात् डट् । कतिपयथः । चतुर्थः । (**चतुरश्छयतावाद्यक्षरलोपश्च**) तुरीयः, तुर्यः ।

**बहुपूगगणसङ्घस्य तिथुक् ५।२।५२**

डटि । बहुतिथः ।

**वतोरिथुक् (१) ५।२।५३**

डटि । यावतिथः ।

**द्वेस्तीयः ५।२।५४**

डटोऽपवादः । द्वयोः पूरणो=द्वितीयः ।

**त्रेः संप्रसारणं च (२) ५।२।५५**

तृतीयः । इह 'हल' इति दीर्घो न, तृतीयेति निर्देशात् ।

---

(१) वतुबन्तस्य इथुगागमः स्याड्डटि इत्यर्थः । यावतां पूरणो यावतिथः ।

(२) त्रिशब्दात् तीय–प्रत्ययः स्यात्प्रकृतेः सम्प्रसारणञ्चेत्यर्थः । त्रयाणां पूरणः=तृतीय । तीय प्रत्यये रेफस्य सम्प्रसारणात् ऋकारः ।

**विंशत्यादिभ्यस्तमडन्यतरस्याम् (१) ५।२।५६**

डटः । विंशतितमः, विंशः । एकविंशतितमः, एकविंशः ।

**नित्यं शतादिमासार्धमास-संवत्सराच्च ५।२।५७**

शतस्य पूरणः=शततमः । मासादेरत एव ज्ञापकात् डट् । मासतमः ।

**षष्ट्यादेश्चासंख्यादेः (२) ५।२।५८**

षष्टितमः । संख्यादेस्तु विंशत्यादिभ्य इति विकल्प एव । एकषष्टः, एकषष्टितमः ।

**मतौच्छः सूक्तसाम्नोः ५।२।५९**

मत्वर्थे । अच्छावाक-शब्दोऽस्त्यस्मिन्नच्छावाकीयं=सूक्तम् । वारवन्तीयं=साम ।

**श्रोत्रियश्छन्दोऽधीते (३) ५।२।८४**

श्रोत्रियः । वेत्यनुवृत्तः छान्दसः ।

**श्राद्धमनेन भुक्तमिनिठनौ ५।२।८५**

श्राद्धी, श्राद्धिकः ।

**पूर्वादिनिः ५।२।८६**

पूर्वं कृतमनेन=पूर्वी ।

**सपूर्वाच्च ५।२।८७**

कृतपूर्वी ।

**इष्टादिभ्यश्च ५।२।८८**

इष्टमनेन-इष्टी । अधीती ।

**अनुपद्यन्वेष्टा (४) ५।२।९०**

अनुपदमन्वेष्टा=अनुपदीगवाम् ।

---

(१) विंशत्यादिभ्यो डटस्तमडागमो वा स्यादित्यर्थः ।

(२) असंख्यापूर्वंदात् षष्ठ्यादेः परस्य डटो नित्यं तमडागमः स्यादित्यर्थः ।

(३) छन्दोऽधीते इति वाक्यार्थे श्रोत्रियन् इति पदं निपात्यते इति भाष्यम् । द्वितीयान्ताच्छन्दशशब्दादधीते इत्यर्थे घन् प्रकृते श्रोत्रादेशश्चेति सूत्रार्थः । घस्य 'इय्' । अध्येत्रणोऽपवादोऽयं घन् । अत्र 'वा' इत्यनुवर्तते तेन पक्षे छन्दोऽधीते-छान्दसः, इत्यणपि ।

(४) अन्वेष्टर्यर्थे इनि प्रत्ययान्तोऽनुपदी इति निपात्यते ।

## साक्षाद्द्रष्टरि (१) संज्ञायाम् ५।२।९१

साक्षाद् द्रष्टा=साक्षी ।

## तदस्यास्त्यस्मिन्निति (२) मतुप् ५।२।९४

गावोऽस्यास्मिन् वा सन्ति–गोमान् ।

## तसौ मत्वर्थे १।४।१९

तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यय परे । संप्रसारणम् । विदुष्मान् (३) । (**गुणवचनेभ्यो मतुपो लुगिष्टः**) शुक्लो गुणोऽस्यास्तीति=शुक्लः पटः (४) । कृष्णः ।

## प्राणिस्थादातो लजन्यतरस्याम् ५।२।९६

चूडालः, चूडावान् । प्राणिस्थात्किम् ? शिखावान्दीपः । ( **प्राण्यङ्गादेव** ) नेह–मेधावान् (५) ।

## सिध्मादिभ्यश्च ५।२।९७

लच्वा । सिध्मलः, सिध्मवान् । (**वात–दन्त–बल–ललाटानामूङ् च**) वातूलः । दन्तूलः । बलूलः । ललाटूलः ।

## वत्सांसाभ्यां कामबले ५।२।९८

लज्वा यथासंख्यं कामवति बलवति चार्थे । वत्सलः । अंसलः ।

---

(१) साक्षात्–इत्यव्ययात् द्रष्टर्यर्थे इनि प्रत्ययः स्यात् संज्ञायाम् । क्रियमाणं कर्म यः पश्यति स साक्षी इत्युच्यते । 'अव्ययानां भमात्रे' इति टिलोपः ।

(२) तदस्यास्तीति तदस्मिन्निति च विग्रहेऽस्ति समानाधिकरणात् प्रथमान्तादस्याऽस्मिन्निति चार्थे मतुप् स्यादित्यर्थः । उपावितौ । इति शब्दो विषय विशेषलाभार्थस्तदुक्तं श्लोकवार्तिके–

भूम–निन्दा–प्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्ति–विवक्षायां भवन्ति मतुबादयः ॥

भूमा=बहुत्वम्–यथा गोमान्, यवमान् । निन्दायाम्=ककुदावर्तिनी कन्या । प्रशंसायाम्–रूपवान् । नित्ययोगे–क्षीरिणो वृक्षा । अतिशायने–उदरिणी कन्या । संसर्गे–दण्डी, छत्री ।

(३) विद्वांसः सन्त्यस्मिन्निति=विदुष्मान् देशः । विद्वच्छब्दान्मतुपि भसञ्ज्ञायां 'वसोः सम्प्रसारणमि'ति सम्प्रसारणम् ।

(४) शुक्लः=शुक्लगुणवानित्यर्थः । कृष्णः=कृष्णगुणवान् ।

(५) मेधा नहि प्राण्यङ्गम् । तस्मान्न लच् ।

**फेनादिलच्च ५।२।९९**

चाल्लच् । अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थमनुवर्तते । फेनिलः, फेनलः, फेनवान् ।

**लोमादि-पामादि-पिच्छादिभ्यः शनेलचः ५।२।१००**

लोमादिभ्य शः । लोमशः, लोमवान् । रोमशः, रोमवान् । पामादिभ्यो नः । पामनः । **(अङ्गात्कल्याणे)** अङ्गना (१) । **(लक्ष्म्या (२) अच्च)** । लक्ष्मणः । **(पिच्छादिभ्य इलच्)** पिच्छिलः, पिच्छवान् । उरसिलः, उरस्वान् ।

**प्रज्ञा- (३) श्रद्धार्चाभ्यो णः ५।२।१०१**

प्राज्ञो-व्याकरणे । प्राज्ञः । श्राद्धः । आर्चः । **(वृत्तेश्च (४))** वार्तः ।

**तपः सहस्राभ्यां विनीनी ५।२।१०२**

विनीन्योरिकारो नकारपरित्राणार्थः (५) । तपस्वी । सहस्री ।

**अण् च ५।२।१०३**

तापसः । साहस्रः । **(ज्योत्स्नादिभ्य (६) उपसंख्यानम्)** ज्यौत्स्नः । तामिस्रः ।

**सिकता-शर्कराभ्यां च ५।२।१०४**

सैकतो गटः । शार्करः ।

**देशे लुबिलचौ च (७) ५।२।१०५**

चादण् मतुप् च । सिकताः सन्त्यस्मिन्देशे-सिकता, सिकतिलः, सैकतः, सिकतावान् । एवं शर्करेत्यादि ।

---

(१) अङ्गान्यस्याः सन्तीति=अङ्गना=कल्याणाङ्गा ।

(२) लक्ष्मी शब्दान्मत्वर्थे न प्रत्ययोऽकारोऽन्तादेशश्च । लक्ष्मीरस्यास्तीति=लक्ष्मणः, नप्रत्यये प्रकृते रकारान्तादेशे णत्वम् ।

(३) प्रज्ञा-श्रद्धाऽर्चाशब्देभ्यो णः स्याद् मतुबर्थे । प्रज्ञाऽस्यास्तीति = प्राज्ञः । श्राद्धः = श्रद्धावान् । आर्चः=अर्चावान् ।

(४) वृत्तिशब्दान्मत्वर्थे णप्रत्ययः ।

(५) अन्यथा 'हलन्त्यमि' ति नकारस्येत्संज्ञालोपौ स्याताम् ।

(६) अण् इति शेषः । ज्योत्स्नाऽस्यास्तीति ज्यौत्स्नः= शुक्लपक्षः । तमिस्रमस्यास्तीति तामिस्रः=कृष्णपक्षः ।

(७) पूर्वसूत्रविहितस्याणो लुप् इलच् च स्यादित्यर्थः ।

**दन्त उन्नत उरच् ५।२।१०६**

उन्नता दन्ता अस्य–दन्तुरः ।

**ऊष–सुषि–मुष्क–मधो रः ५।२।१०७**

ऊषरः । सुषिरः । मुष्कोऽण्डः । मुष्करः । मधुरः ।

(**रप्रकरणे खमुख–कुञ्जेभ्य उपसंख्यानम्**) खरः (१) । मुखरः । कुञ्जो हस्तिहनुः । कुञ्जरः । (**नग–पांसु–पाण्डुभ्यश्च**) नगरम् (२) । पांसुरः । पाण्डुरः । (**कच्छ्वा ह्रस्वत्वं च**) कच्छुरः (३)।

**द्यु–द्रुभ्यां मः (४) ५।२।१०८**

द्युमः । द्रुमः ।

**केशाद्वोऽन्यतरस्याम् ५।२।१०९**

प्रकृतेनान्यतरस्यांग्रहणेन मतुपि सिद्धे पुनर्ग्रहणं इनि–ठनोः समावेशार्थम् । केशवः, केशी, केशिकः, केशवान् । (**अन्येभ्योऽपि दृश्यते** (५) । मणिवो नागविशेषः । हिरण्यवो=निधिविशेषः (**अर्णसो** (६) **लोपश्च**) अर्णवः ।

**गाण्डयजगात्संज्ञायाम्** (७) **५।२।११०**

ह्रस्वदीर्घयोर्यणातन्त्रेण निर्देशः । गाण्डीवम् । गाण्डिवम्=अर्जुनस्य धनुः । अजगवं=पिनाकः।

**काण्डाण्डादीरन्नीरचौ ५।२।१११**

काण्डीरः । आण्डीरः ।

**रजः–कृष्यासुति–परिषदो वलच् ५।२।११२**

रजस्वला=स्त्री । कृषीवलः । 'वले' इति दीर्घः । आसुतीवलः=शौण्डिकः । परिषद्वलः । पर्षदिति पाठान्तरम् । पर्षद्वलः । (**अन्येभ्योऽपि दृश्यते**) भ्रातृवलः । पुत्रवलः । शत्रुवलः ।

---

(१) खं मुखविलमस्यास्तीति खरः=गर्दभः । मुखरः=शब्दवान । कुञ्जरः=हस्ती ।

(२) नगाः=प्रासादा अत्र सन्तीति–नगरम् । पांसुः=दोषः सोऽस्यास्तीति–पांसुरः पाण्डुः=शुक्लवर्णः सोऽस्यास्तीति पाण्डुरः ।

(३) कच्छुरः=शुनांरोगविशेषः ।

(४) दिव् शब्दात् द्रुशब्दाच्च मत्वर्थे मप्रत्ययः ।

(५) व प्रत्यय इति शेषः ।

(६) अर्णस् इत्यस्मात् व प्रत्ययोऽन्तलोपश्चेत्यर्थः ।

(७) गाण्डिशब्दाद् गाण्डीशब्दाद् अजगशब्दाच्च मत्वर्थेव प्रत्ययः स्यात्संज्ञायाम् ।

**दन्तशिखात्संज्ञायाम् ५।२।११३**

दन्तावलो=हस्ती । शिखाबलः=केकी ।

**अत (१) इनि ठनौ ५।२।११५**

दण्डी, दण्डिकः ।

**व्रीह्यादिभ्यश्च ५।२।११६**

व्रीही, व्रीहिकः ।

**तुन्दादिभ्य इलच्च ५।२।११७**

चादिनि–ठनौ मतुप् च। तुन्दिल (२), तुन्दी, तुन्दिकः, तुन्दवान्। उदर, पिचण्ड, यव, व्रीहि इति तुन्दादिः ।

**रूपादाहतप्रशंसयोर्यप् ५।२।१२०**

आहतं रूपमस्यास्तीति रूप्यः=कार्षापणः । प्रशस्तं रूपमस्यास्तीति रूप्यो=गौः । (अन्येभ्योऽपि दृश्यते) हिम्याः=पर्वताः। गुण्याः= ब्राह्मणाः ।

**अस्माया(३)–मेधा–स्रजो विनिः ५।२।१२१**

यशस्वी, यशस्वान्। मायावी, मायावान्। व्रीह्यादिपाठान्मायी, मायिकः । स्रग्वी । (**शृङ्ग–वृन्दाभ्यामारकन्**) शृङ्गारकः । वृन्दारकः । (**फल–वर्हाभ्यामिनच्**) फलिनः । बर्हिणः। (**हृदयाच्चालुरन्यतरस्याम्**) हृदयालः, हृदयी, हृदयिकः, हृदयवान् ।(**शीतोष्ण–तृप्रेभ्यस्तदसहने**) शीतं न सहते–शीतालुः । उष्णालुः । तृप्रः=पुरोडाशस्तन्न सहते=तृप्रालुः ।(**तप्पर्व–मरुद्भ्याम्**) पर्वतः। मरुत्तः ।

**ऊर्णाया युस् ५।२।१२३**

ऊर्णायुः ।

**वाचोग्मिनिः ५।२।१२४**

वाग्मी ।

---

(१) अदन्तान्मत्वर्थे इनि–ठन स्तः ।

(२) तुन्दं=वृद्धा नाभिरस्यास्तीति–तुन्दिलः ।

(३) अस्=असन्तात् माया–मेधा–स्रज् शब्देभ्यश्च विनिः स्यान्मतुबर्थे । अन्यतरस्यां ग्रहण-मिह सम्बध्यते 'यशस्वान्' इति भाष्योदाहरणात् । यशोऽस्यास्तीति–यशस्वी, यशस्वान् इति मतुप्, 'तसौ मत्वर्थे' भत्वात्पदत्वाभावेन रुत्वन्न ।

**आलजाटचौ बहुभाषिणि ५।२।१२५**

(कुत्सित इति वक्तव्यम्) कुत्सितं बहु भाषते=वाचालः, वाचाटः। यस्तु सम्यग्बहु वदति तत्र वाग्मीत्येव।

**स्वामिन्नैश्वर्ये ५।२।१२६**

ऐश्वर्यवाचकात् स्वशब्दान्मत्वर्थे आमिनिच्। स्वामी।

**अर्श आदिभ्योऽच् ५।२।१२७**

अर्शांसि अस्य विद्यन्ते--अर्शसः। आकृतिगणोऽयम्।

**वातातीसाराभ्यां कुक् च ५।२।१२९**

चादिनिः। वातकी। अतिसारकी। (**पिशाचाच्च**) पिशाचकी।

**हस्ताज्जातौ ५।२।१३३**

हस्ती।

**वर्णाद् ब्रह्मचारिणि ५।२।१३४**

वर्णी।

**कं-शंभ्यां ब-भ-युस्ति-तु-त-यसः ५।२।१३८**

कमित्युदकसुखयोः, शमिति सुखे। आभ्यां सप्त प्रत्ययाः स्युः। युस् यसोः सकारः पदत्वार्थः। कम्बः, कम्भः, कंयुः, कन्तिः, कन्तुः, कन्तः, कंयः। एवं शम्ब इत्यादि।

**तुन्दि-वलि-वटेर्भः ५।२।१३९**

तुन्दिभः। वलिभः। वटिभः।

**अहं-शुभमोर्युस् ५।२।१४०**

अहंयुः=अहङ्कारवान्। शुभंयुः=शुभान्वितः।

## ॥ इति मत्वर्थीयाः ॥

अभ्यासः

**प्रश्न १. पञ्चमः– इति प्रयोगस्य सिद्धिपथं दर्शयत**

उ०– पञ्चम इत्यत्र पञ्चानां पूरण इति विग्रहे षष्ठयन्तात् पञ्चन् शब्दात् "तस्य पूरणे डट्" इति डट्प्रत्यये "नान्तादसंख्यादेर्मट्" इति डटो मडागमे नलोपे स्वादिकार्ये रूपं साधु।

**प्रश्न २. (चतुरश्छयतावाद्यक्षरलोपश्च– इति वार्तिकस्यार्थं विलिख्योदाहरणं साध्यताम्**

उ०– (चतुरश्छयतावाद्यक्षरलोपश्च) चतुर्शब्दात्षष्ठ्यन्तात् पूरणे छयती स्तः, आद्यक्षरलोपश्चेत्यर्थः । उदाहरणं यथा– तुरीयः, तुर्यः ।

तुरीय इत्यत्र चतुर्णां पूरण इति विग्रहे षष्ठ्यन्ताच्चतुर् शब्दात् 'तस्य पूरणे डट्' इति प्राप्तं डटं प्रबाध्य पूर्वोक्तवार्तिकेन छ प्रत्यये छस्येयादेशे चतुर् इय इति जाते तेनैव वार्तिकेनाद्यक्षरलोपे च तुरीय इति सिध्यति ।

चतुर्शब्दात् यत्प्रत्यये तु तेनैवाद्यक्षरलोपे तुर्यः इति सिध्यति ।

**प्रश्न ३. अधस्तनप्रयोगेषु विग्रहः प्रदर्शनीयः**

दन्तुरः, पाण्डुरः, केशवः, यशस्वी, वाचाल।

उ०– उन्नता दन्ता अस्य = दन्तुरः । पाण्डुः शुक्लवर्णः सोऽस्यास्तीति = पाण्डुरः । केशाः सन्त्यस्मिन्निति = केशवः । यशोऽस्यास्तीति = यशस्वी । कुत्सितं बहु भाषते इति = वाचालः ।

**प्रश्न ४. 'वातकी' इति प्रयोगः साध्यताम्**

उ०– वातः = वातव्याधिरस्यास्तीति विग्रहे 'वातातिसाराभ्यां कुक् चे' ति सूत्रेण इनि प्रत्यये कुगागमे च वातकिन् इत्यस्मात्प्रातिपदिकत्वे सौ वातकी इति रूपं सिध्यति।

## अभ्यासार्थं प्रश्नाः

(१) षष्ठः– इति प्रयोगः साध्यताम् ।

(२) मासतमः– इति कथं निष्पद्यते ?

(३) **अधस्तनसूत्राणां सोदाहरणमर्थ प्रदर्श्यताम्**
'इष्टादिभ्यश्च', 'देशे लुबिलचौ च', 'वर्णाद्ब्रह्मचारिणि' ।

(४) **अधस्तन विग्रहेषु रूपाणि प्रदर्श्यन्ताम्**
श्राद्धमनेन भुक्तम्, साक्षाद् द्रष्टा, दन्ता अस्य सन्ति, रजोऽस्या अस्ति, अहमस्यास्ति ।

(५) **लक्ष्मणः, पिच्छिल , केशवः, कृषीवलः स्वामी इति साध्यताम् ।**

(६) **मायावी, मायावान् मायी, मायिकः– इति रूपचतुष्टयस्य साधुत्वं दर्शनीयम् ।**

(७) **अधस्तन प्रयोगा विग्रह प्रदर्श्य वाक्ये प्रयुज्यन्ताम्**
विंशः, एकषष्टितमः, अधीती, पामनः, कुञ्जरः ।

# अथ प्राग्दिशीयाः

**प्राग् दिशो विभक्तिः ५।३।१**

दिक् शब्देभ्यः, इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः। अथ स्वार्थिकाः।

**किं–सर्वनाम – बहुभ्योऽद्वयादिभ्यः(१) ५।३।२**

किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते।

**पञ्चम्यास्तसिल् ५।३।७**

पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा।

**कु ति–होः ७।२।१०४**

किमः कुस्तादौ हादौ च विभक्तौ। कुतः(२)। कस्मात्।

**इदम इश्(३) ५।३।३**

प्राग्दिशीये। इतः।

**एतदोऽन् ५।३।५**

एतदः प्राग्दिशीये। अनेकालत्वात्सर्वादेशः। अतः। अमुतः। यतः। ततः। बहुतः। द्वयादेस्तु द्वाभ्याम्।

**पर्यभिभ्यां च ५।३।९**

तसिल्। (**सर्वोभयार्थाभ्यामेव**) परितः सर्वत इत्यर्थः अभितः= उभयत इत्यर्थः।

**सप्तम्यास्त्रल् ५।३।१०**

कुत्र। यत्र। तत्र। बहुत्र।

---

(१) सर्वनामत्वेऽपि द्वयादि निषेधात् किमः पृथग् ग्रहणम्।
(२) पञ्चम्यन्तात् किम् शब्दात् वातसिल् प्रत्यये 'सुपो धातु प्रातिपदिकयोः' इति सुपो लुकि किमः 'कु' इत्यादेशे कुतः। 'तसिलादयः प्राक् पाशपः' इत्युक्ते व्ययत्वम्। पक्षे कस्मात्।
(३) शित्वात्सर्वादेशः।

**इदमोहः ५।३।११**

त्रलोऽपवादः । इह ।

**किमोऽत् ५।३।१२**

वा स्यात् ।

**क्वाति(१) ७।२।१०५**

किमः । क्व, कुत्र ।

**इतराभ्योऽपि दृश्यन्ते ५।३।१४**

पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते । (**दृशिग्रहणाद्भवदादियोग एव**) स भवान्, ततो(२) भवान्, तत्र भवान् । तं भवन्तम, ततो भवन्तम्, तत्र भवन्तम् । एवं दीर्घायुः(३) । देवानां प्रियः । आयुष्मान् ।

**सर्वैकान्य–किं–यत्तदः काले दा ५।३।१५**

सप्तम्यन्तेभ्य एभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् ।

**सर्वस्य सोऽन्यतरस्यां दि ५।३।६**

दादौ प्राग्दिशीये सर्वस्य सो वा । सर्वस्मिन् काले–सदा, सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा । काले किम्? सर्वत्र देशे ।

**इदमोर्हिल् ५।३।१६**

सप्तम्यन्तात् ।

**एतेतौ र–थोः ५।३।४**

इदम 'एत–इत्' (४) एतौस्तो रेफादो थकारादौ च प्राग्दिशीये परे । अस्मिन् काले–एतर्हि । काले किम् ? इह देशे ।

---

(१) किमः 'क्व' आदेशः स्यात् अत् प्रत्यये इत्यर्थः ।

(२) स भवान् इत्यर्थे = ततो भवान्, तत्र भवान् इतीत्यर्थः । एवं तं भवन्तम् इत्यर्थे= ततो भवन्तम्, तत्र भवन्तम् इति ।

(३) इत्यादिप्रयोगेऽपि तथेत्यर्थः । ततो दीर्घायुः, तत्र दीर्घायुः । ततो देवानां प्रियः, तत्र देवानां प्रियः (स दीर्घायुः) स देवानां प्रियः इत्यर्थः ।

(४) रेफादौ एतः, थादौ इत् इति विवेकः ।

**अधुना(१) ५।३।१७**

इदमो निपातोऽयम् ।

**दानीं च ५।३।१८**

इदमो दानीं प्रत्ययः काले । इदानीम ।

**तदो (२) दा च ५।३।१९**

तदा, तदानीम् ।

**अनद्यतनेर्हिलन्यतरस्याम् (३) ५।३।२१**

कर्हि, कदा। यर्हि, यदा । तर्हि, तदा ।

**एतदः ५।३।५**

एतद्-शब्दस्य । एतस्मिन् काले—एतर्हि ।

**सद्यः(४)—परुत्—परार्यैषमः परेद्यव्यद्य—पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युर-धरेद्युरुभयेद्युरुत्तरेद्युः ५।३।२२**

एते निपात्यन्ते । (**द्युश्चोभयाद्वक्तव्यः**) उभयेद्युः ।

**प्रकारवचने थाल् ५।३।२३**

प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् । तेन प्रकारेण—तथा । यथा ।

---

(१) इदं शब्दात् सप्तम्यन्तात् कालवाचकात् स्वार्थे 'अधुना' प्रत्ययः स्यात् । अस्मिन् (काले) = अधुना । इदम इश्, यस्येति चेतीकारलोपः, ततः प्रत्ययमात्रमवशिष्यते ।

(२) तच्छब्दाद् दानीं प्रत्ययो दाप्रत्ययश्च स्यादित्यर्थः । तस्मिन् काले=तदा, तदानीम् । त्यदाद्यत्वम् ।

(३) अनद्यतनकालवृत्तिभ्यः । किमादिभ्यः=सप्तम्यन्तेभ्योर्हिल्प्रत्ययो वा स्यात्, पक्षे दाप्रत्यश्च ।

(४) सद्यः समानस्य सभावोद्यस् प्रत्ययश्च, 'समानोद्यश्चाहनि' इति वार्तिकम् । पूर्वस्मिन् वत्सरे=परुत् । पूर्वतरे वत्सरे=परारि 'पूर्वपूर्वतरयोः परादेश उदारिच्प्रत्ययौ संवत्सरे ।' 'इदम इश् समसण्' इति वार्तिकेन—ऐषमः=अस्मिन्संवत्सरे इत्यर्थः । 'परस्मादे द्यव्यहनि' इति वार्तिकेन=परेद्यवि । 'इदमोऽश्भावो द्यश्च' इति वार्तिकेन=अद्य, अस्मिन्नहनि इत्यर्थः । 'पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् च' इति वार्तिकेन एभ्य एद्युस् प्रत्यये एतेऽग्रिमाः सिद्धयन्ति । पूर्वस्मिन्नहनि=पूर्वेद्युः । अन्यस्मिन्नहनि=अन्येद्युः । अन्यतरस्मिन्नहनि=अन्यतरेद्युः । इतरस्मिन्नहनि=इतरेद्युः । अपरस्मिन्नहनि=अपरेद्युः । अधरस्मिन्नहनि=अधरेद्युः । उभयोरह्नो=उभयेद्युः । उत्तरस्मिन्नहनि=उत्तरेद्युः ।

**इदमस्थमुः ५।३।२४**

थालोऽपवादः । (एतदोऽपि वाच्यः) अनेन एतेन वा प्रकारेण–इत्थम् ।

**किमश्च ५।३।२५**

केन प्रकारेण–कथम् ।

## ।। इति प्राग्दिशीयाः ।।

अभ्यासः

**प्रश्न १. कुतः– इति प्रयोगस्य साधुत्वप्रकारं दर्शयत**

उ०– कुतः– इत्यत्र कस्मात् इति विग्रहे पञ्चम्यन्तात् किं शब्दात् 'पञ्चम्यास्तसिल्' इति वैकल्पिकतसिल् प्रत्यये 'सुपोधातु प्रातिपदिकयोरिति' सुपो लुकि 'कुति होः' इति किमः 'कु' इत्यादेशे 'तसिलादयः प्राक्पाशपः' ख्ययत्वे कुतः, पक्षे किम् शब्दात्पञ्चम्या एकवचने कस्मात् इति रूपद्वयं साधु ।

**प्रश्न २. सदा, सर्वदा– इति रूपद्वयं साध्यम्**

उ०– सर्वस्मिन्काले इति विग्रहे सप्तम्यन्तात्सर्वशब्दात् 'सर्वैकान्य-किं- यत्तदः काले दा' इति दाप्रत्यये सुपोलुकि 'सर्वस्य सोऽन्यतरस्यां दि' इति सर्वस्य वैकल्पिक 'स' आदेशेऽव्ययत्वे सदा, सादेशाभावे सर्वदा इति रूपद्वयं सिद्धम् ।

**प्रश्न ३. अधस्तन पदानां समुचित वाक्ये प्रयोगं कुर्वन्तु**

कुत्र, क्व, यदा, इह, इदानीम् ।

उ०– कुत्र गच्छन्ति गुरवः ? क्व सूर्यप्रभवो वंशः ? यदा सूर्य उदेति तदा तमः पलायते । इह बहवो विद्वांसः समायान्ति । इदानीं नेपालदेशे श्री ५ वीरेन्द्रो भुवं प्रशस्ति ।

अभ्यासार्थं प्रश्नाः

(१) इतः– इति प्रयोगः कथं सिध्यति ?

(२) 'सप्तम्यास्त्रल्' इति सूत्रस्य च त्वार्युदाहरणानि दर्शयत ।

(३) **अधस्तन प्रयोगाणां वाक्ये प्रयोगः कार्य**

एकदा, एतर्हि, अतः, पूर्वेद्युः, कथम् ।

(४) (एतदोऽपि वाच्यः ) इति वार्तिकस्यार्थमुदाहरणं च लिख्यताम् ।

(५) अदस् शब्दात् तसिल्प्रत्यये कीदृशं रूपं जायते ?

# अथ प्रागिवीयाः

## दिक्शब्देभ्यः सप्तमी-पञ्चमी- प्रथमाभ्यो दिग्देशकालेष्वस्तातिः ५।३।२७

सप्तम्याद्यन्तेभ्यो दिशिरूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिः ।

## पूर्वाधरावराणामसिपुरधवश्चैषाम् ५।३।३९

एभ्योऽस्तात्यर्थेऽसिस्तद्योगे चैषां पुर् अध् अव् इत्यादेशाः स्युः ।

## अस्ताति च ५।३।४०

पूर्वादीनां पुरादयः स्युः । पूर्वस्यां पूर्वस्याः पूर्वा वा दिक्–पुरः, पुरस्तात् । अधः अधस्तात् । अवः ।

## विभाषाऽवरस्य ५।३।४१

अस्तातौ अब्वा स्यात् । अवस्तात्, अवरस्तात् । एवं देशे काले च । दिशि रूढेभ्यः किम्–ऐन्द्यां वसति (१) । सप्तम्याद्यन्तेभ्यः किम् ? पूर्वं ग्रामं गतः । दिगादि वृत्तिभ्यः किम् ? पूर्वस्मिन् गुरौ वसति । अस्ताति चेति ज्ञापकादसिरस्ताति न बाधते ।

## दक्षिणोत्तराभ्यामतसुच् ५।३।२८

अस्तातेरपवादः । दक्षिणतः । उत्तरतः ।

## विभाषा परावराभ्याम् ५।३।२९

परतः, परस्तात् । अवरतः, अवरस्तात् ।

## अञ्चेर्लुक् ५।३।३०

अञ्चत्यन्ताद् दिक्शब्दादस्तातेर्लुक् स्यात् । प्राक् । उदक् ।

## उपर्युपरिष्टात् ५।३।३१

निपातावेतौ

## पश्चात् ५।३।३२

तथा ।

---

(१) ऐन्द्रीशब्दो न केवलं दिशिरूढः किन्तु इन्द्रदेवताके पदार्थे ।

**उत्तराधरदक्षिणादातिः ५।३।३४**

उत्तरात् । अधरात् । दक्षिणात् ।

**एनबन्यतरस्यामदूरेऽपञ्चम्याः ५।३।३५**

उत्तरादिभ्य एनब्वा दवध्यवधिमतोः सामीप्ये । पञ्चम्यन्तात्तु न । उत्तरेण । अधरेण दक्षिणेन । पक्षे यथास्वं प्रत्ययाः । इह केचिद् दिक्शब्दमात्रादेनपमाहुः । पूर्वेण ग्रामम् ।

**दक्षिणादाच् ५।३।३६**

अस्तातेविषये । दक्षिणा वसति । अपञ्चम्या इत्येव । दक्षिणादागतः ।

**आहि च दूरे ५।३।३७**

चादाच् । दक्षिणाहि, दक्षिणा ।

**उत्तराच्च ५।३।३८**

उत्तराहि, उत्तरा ।

**संख्याया विधार्थे धा ५।३।४२**

क्रियाप्रकारे वर्तमानात् संख्याशब्दात्स्वार्थे धा स्यात् । चतुर्धा ।

**एकाद्धो ध्यमुञन्यतरस्याम् (१) ५।३।४४**

ऐकध्यम्, एकधा ।

**द्वित्र्योश्च धमुञ् ५।३।४५**

आभ्यां धा इत्यस्य धमुञ् वा । द्वैधम्, द्विधा । त्रैधम्, त्रिधा ।

**एधाच्च (२) ५।३।४६**

द्वेधा । त्रेधा ।

**याप्ये पाशप् ५।३।४७**

कुत्सितो भिषग्–भिषक्पाशः। **(तीया दीकक् स्वार्थे वा वाच्यः)** द्वैतीयीकः, द्वितीयः। तार्तीयीकः, तृतीयः । **(न विद्यायाः(३))** । द्वितीयाविद्येत्येव ।

**एकादाकिनिच्चासहाये ५।३।५२**

चात्कन्लुकौ । एकः, एकाकी, एककः ।

---

(१) एकशब्दात्परस्य धाप्रत्ययस्य ध्यमुञादेशः स्याद्विकल्पेनेत्यर्थः ।

(२) द्वि त्रिभ्यां परस्य धाप्रत्ययस्य एधाच् इत्यादेशः स्यादित्यर्थः।

(३) विद्यावृत्तेस्तीयप्रत्ययान्ता दीकक् नेत्यर्थः।

**भूतपूर्वे चरट् ५।३।५३**

आढ्यो भूतपूर्वः– आढ्यचरः ।

**षष्ठ्या रूप्य च ५।३।५४**

षष्ठ्यन्ताद् भूतपूर्वे रूप्यः स्याच्चरट् च । कृष्णस्य भूतपूर्वो गौः= कृष्णरूप्यः, कृष्णचरः ।

**अतिशायने तमबिष्ठनौ ५।३।५५**

अतिशयविशिष्टार्थे एतौ स्तः । अयमेषामतिशयेनाढ्यः आढ्यतमः । लघुतमः, लघिष्ठः ।

**तिङश्च ५।३।५६**

तिङन्तादतिशये द्योत्ये तमप् स्यात् ।

**तरप्तमपौ घः १।१।२२**

**किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५।४।११**

किम् एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्ता दामुः स्यान्नतु द्रव्यप्रकर्षे । किन्तमाम् । प्राण्हेतमाम् । प्रगेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः ।

**द्विवचन–विभज्योपपदे तरबीयसुनौ ५।३।५७**

द्वयोरेकस्याऽतिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । पूर्वयोरपवादः । अयमनयोरतिशयेन लघुतरो, लघीयान् । उदीच्याः प्राच्येभ्यः पटवः= पटुतराः, पटीयांसः ।

**अजादी गुणवचनादेव ५।३।५८**

इष्ठन्नीयसुनौ । नेह– पाचकतरः, पाचकतमः ।

**प्रशस्यस्य श्रः ५।३।६०**

इष्ठेयसोः परतः ।

**प्रकृत्यैकाच् ६।४।६३**

इष्ठादिष्वेकाच् प्रकृत्या स्यात् । श्रेष्ठः, श्रेयान् ।

**ज्य च ५।३।६१**

प्रशस्यस्य ज्यादेश इष्ठेयसोः । ज्येष्ठः ।

**ज्यादादीयसः ६।४।१६०**

'आदेः परस्य' ज्यायान् ।

**वृद्धस्य च ५।३।६२**

ज्यादेश अजाद्योः । ज्येष्ठः, ज्यायान् ।

## अन्तिक–बाढयोर्नेद – साधौ ५।३।६३

अजाद्योरिष्ठेयसोः । नेदिष्ठः, नेदीयान् । साधिष्ठः साधीयान् ।

## स्थूल–दूर–युव–ह्रस्व–क्षिप्र–क्षुद्राणां यणादिपरं पूर्वस्य च गुणः ६।४।१५६

ऐषां यणादिपरं लुप्यते पूर्वस्य च गुण इष्ठादिषु । स्थविष्ठः । दविष्ठः । यविष्ठः । ह्रसिष्ठः । क्षेपिष्ठः। क्षोदिष्ठः । एव मीयसुन् । ह्रस्व क्षिप्र क्षुद्राणां पृथ्वादित्वाद् – ह्रसिमा । क्षेपिमा । क्षोदिमा ।

## प्रिय–स्थिर–स्फिरोरु–बहुल–गुरु–वृद्ध–तृप्र–दीर्घ–वृन्दारकाणां प्र–स्थ–स्फ–वर्बंहि–गर्वर्षि–त्रप्-द्राघि-वृन्दाः ६।४।१५७

प्रियादीनां प्रादयः स्युरिष्ठादिषु । प्रेष्ठः । स्थेष्ठः। स्फेष्ठः । वरिष्ठः। बंहिष्ठः । गरिष्ठः। वर्षिष्ठः। त्रपिष्ठः। द्राघिष्ठः। वृन्दिष्ठः। एवमीयसुन्। प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वात्प्रेमेत्यादि ।

## बहोर्लोपो भू च बहोः ६।४।१५८

बहोः परयोरिष्ठेयसोर्लोपः स्याद् बहोश्च भूरादेशः। भूमा, भूयान् ।

## इष्ठस्य यिट् च ६।४।१५९

बहोः परस्य इष्ठस्य लोपो यिडागमश्च। भूयिष्ठः ।

## विन्मतोर्लुक् ५।३।६५

इष्ठेयसोःपरतः। अतिशयेन स्रग्वी–स्रजिष्ठः। अतिशयेन त्वग्वान्–त्वचिष्ठः, त्वचीयान् ।

## प्रशंसायां रूपप् ५।३।६६

सुबन्तात्तिङन्ताच्च। प्रशस्तः पटुः- पटुरूपः। पचतिरूपम् ।

## ईषदसमाप्तौ कल्पब्-देश्य-देशीयरः ५।३।६७

ईषदूनो विद्वान्- विद्वत्कल्पः, विद्वद्देश्यः, विद्वद्देशीयः। पचतिकल्पम् ।

## विभाषा सुपो बहुच् पुरस्तात्तु ५।३।६८

ईषदूनः, पटुर्बहुपटुः, पटुकल्पः। सुपः किम्? यजतिकल्पम् ।

## प्रागिवात्कः ५।३।७०

इवे प्रतिकृतावित्यतः प्राक् काधिकारः ।

## अव्ययसर्वनाम्नामकच् प्राक् टेः ५।३।७१

कापवादः। तिङश्चेत्यनुवर्तते ।

**कस्य च दः ५।३।७२**

कान्ताव्ययस्य दादेशोऽकच्च ।

**अज्ञाते ५।३।७३**

कस्यायमश्वोऽश्वकः। उच्चकैः। नीचकैः। सर्वके। पचतकि। धकित् ।

**कुत्सिते ५।३।७४**

कुत्सितोऽश्वोऽश्वकः ।

**अल्पे ५।३।८५**

अल्पं तैलं- तैलकम्। ह्रस्वो वृक्षो- वृक्षकः। **(अस्मिन् प्रकरणे हलादौ प्रत्यये द्वितीयादचः परस्य लोपो वा वाच्यः)** देवदत्तकः, देवकः, **(लोपः पूर्वपदस्य च)** दत्तकः।**(विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वा वाच्यः)** शत्यभामा, भामा, सत्या ।

**कुटी-शमी-शुण्डाभ्यो रः ५।३।८८**

ह्रस्वाकुटी कुटीरः। शमीरः। शुण्डारः ।

**कुत्वा डुपच् ५।३।८९**

ह्रस्वा कुतूः= कुतुपः। 'कुतूः कृत्ते स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्' ।

**कासू-गोणीभ्यां ष्टरच् ५।३।९०**

आयुधविशेषः कासूः। ह्रस्वा सा कासूतरी। गोणीतरी ।

**वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ५।३।९१**

वत्सतरः। उक्षतरः। अश्वतरः। ऋषभतरः ।

**किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् ५।३।९२**

अनयोः कतरो वैष्णवः । यतरः । ततरः।

**वा बहूनां जातिपरिप्रश्ने डतमच् ५।३।९३**

जातिपरिप्रश्न इति प्रत्याख्यातमाकरे । कतमो भवतां कठः । यतमः । ततमः—वाग्रहणमकजर्थम् ।

**यकाच्च प्राचाम् ५।३।९४**

डतरच् डतमच्च स्यात् । अनयोरेकतरो मैत्रः । एषामेकतमः ।

**॥ इति प्रागिवीयाः ॥**

## अभ्यासः

**प्रश्न १. पुरः, पुरस्तात्–इति प्रयोगौ सविग्रहं साध्यौ**

उ०– पूर्वस्यां, पूर्वस्याः, पूर्वा वा दिक् इति विग्रहे पूर्वाशब्दात् 'दिक् शब्देभ्यः सप्तमी–पञ्चमी–प्रथमाभ्यो दिग्देशकालेष्वस्तातिः' रित्यस्ताति प्रत्यये 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इति सूत्रेणासिप्रत्यये चोभयत्र पूर्वायाः 'पुर्' इत्यादेशेऽव्ययत्वे पुरः, पुरस्तात् इति रूपद्वयं साधु ।

**प्रश्न २. द्वैधम्, द्विधा इति कथं सिध्यतः ?**

उ०– द्विप्रकारा क्रियेति विग्रहे द्विशब्दात् 'संख्याया विधार्थे धा' इति धाप्रत्यये 'द्वित्र्योश्च धमुञ्' इति धा इत्यस्य वैकल्पिक धमुञादेशे ञकारोकारयोरित्संज्ञायां लोपे च ञित्वादादिवृद्धौ, अव्ययत्वे द्वैधम्, पक्षे द्विधेति रूपद्वयं निष्पन्नम् ।

**प्रश्न ३. प्रशस्य शब्दात् इष्ठन्प्रत्यये, इयसुन् प्रत्यये च रूपद्वयं सम्यक्साध्यताम्**

उ०– अयमेषामतिशयेन प्रशस्य इति विग्रहे प्रशस्य शब्दात् 'अतिशायने तमबिष्ठनौ' इतीष्ठन् प्रत्ययेऽनुबन्धलोपे प्रशस्य+इष्ठ इति जाते, अयमनयोरतिशयेन प्रशस्य इति विग्रहे प्रशस्य शब्दात् 'द्विवचन–विभज्योपपदे तरबीयसुनौ' इतीयसुन्प्रत्यये नकारोकारयोरित्संज्ञायां लोपे च प्रशस्य+इयस् इति जाते उभयत्र 'प्रशस्यस्य श्रः' इति श्रादेशे 'टे' रि ति टिलोपे प्राप्ते 'प्रकृत्यैकाच्' इति प्रकृतिभावे गुणे स्वादिकार्ये श्रेष्ठः, श्रेयान् रूपद्वयं साधु ।

## अभ्यासार्थं प्रश्नाः

(१) अधः, अधस्तात्–इति रूपद्वयं प्रकृतिप्रत्ययौ निर्दिश्य ससूत्रं साध्यताम् ।

(२) **अधो लिखितप्रयोगाः सूत्रप्रत्ययनिर्देशपूर्वकं सुसाध्याः**
दक्षिणाहि, ऐकध्यम्, त्रेधा, भिषक्पाशः, द्वैतीयीकः ।

(३) 'एकादाकिनिच्चासहाये' इति सूत्रस्यार्थं विलिख्योदाहरणत्रयं साध्यताम् ।

(४) **अधोलिखित विग्रहेषु कीदृशं रूपं सम्पद्यते ?**
भूतपूर्वं आढ्यः, कस्यायमश्वः, अल्पं तैलम्, ह्रस्वाकुटी, अतिशयेन वृद्धः ।

(५) प्रिय–थिर–उरु–गुरु–दीर्घशब्देभ्य इष्ठन्प्रत्यये इयसुन् प्रत्यये च रूपाणि लिख्यन्ताम् ।

(६) ( विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वा वाच्यः ) इति वार्तिकस्योदाहरणत्रयं देयम् ।

(७) भूमा– इति पदं कस्माच्छब्दात्कस्मिन्प्रत्यये कृते कथं सिध्यतीति लिख्यताम् ।

(८) 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति सूत्रस्यार्थं विलिख्योदाहरणानि च लिख्यन्ताम् ।

(९) कतरः, कतमः– इति प्रयोगौ प्रत्ययनिर्देशपूर्वकं सुसाध्यौ ।

# अथ स्वार्थिकाः

**इवे प्रतिकृतौ ५।३।९६**

कन्स्यात् । अश्व इव प्रतिकृतिरश्वकः ।

**शाखादिभ्यो यः ५।३।१०३**

शाखेव – शाख्यः । मुख्यः । जघन्यः । अग्र्यः । शरण्यः ।

**कुशाग्राच्छः ५।३।१०५**

कुशाग्रीयः ।

**तत्प्रकृतवचने मयट् ५।४।२१**

प्राचुर्येण प्रस्तुतं=प्रकृतं, तस्य वचनं = प्रतिपादनम् । भावे अधिकरणे वा ल्युट् । आद्ये प्रकृतमन्नम् = अन्नमयम् । अपूपमयम् । द्वितीये – अन्नमयो यज्ञः अपूपमयं – पर्व ।

**संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ५।४।१७**

अभ्यावृत्तिर्जन्म क्रियाजन्मगणनवृत्तेः संख्यायाः स्वार्थे कृत्वसुच् । पञ्चकृत्वो भुङक्ते । संख्यायाः किम् ? भूरिवारान्भुङक्ते ।

**द्वित्रिचतुर्भ्यः सुच् ५।४।१८**

कृत्वसुचोऽपवादः । द्विर्भुङक्ते । त्रिर्भुङक्ते । 'रात्सस्य' । चतुर्भुङक्ते ।

**एकस्य सकृच्च ५।४।१९**

सकृदादेशः, चात्सुच् । सकृद्भुङक्ते ।

**देवतान्तात्तादर्थ्ये यत् ५।४।२४**

तदर्थ एव तादर्थ्यम् । स्वार्थे ष्यञ् । अग्नि देवतायै इदमग्निदैवत्यम् । पितृदैवत्यम् ।

**पादार्घाभ्यां च ५।४।२५**

पादार्थमुदकं पाद्यम् । अर्घ्यम् ।

**अतिथेर्ञ्यः ५।४।२६**

अतिथये इदमातिथ्यम् (**नवस्य नू आदेशस्त्नप्तनप्खाश्च वक्तव्याः**) स्वार्थ । नूत्नम्, नूतनम् नवीनम् । (**भाग–रूप–नामभ्यो धेयः**) भाग धेयम् (१) । रूप धेयम् । नामधेयम् । (**आग्नीध्र – साधारणादञ्**) आग्नीध्रम् । साधारणम् ।

---

(१) भाग एव=भाग धेयम्, रूपमेव=रूप धेयम् । नामैव=नाम धेयम् ।

**देवात्तल् ५।४।२७**

देव एव – देवता ।

**अवेः कः ५।४।२८**

अविरेव – अविकः ।

**यावादिभ्यः कन् ५।४।२९**

याव एव – यावकः । मणिकः । (**सर्वप्रातिपदिकेभ्यः स्वार्थे कन्**) बहुतरकम् ।

**मृदस्तिकन् ५।४।३९**

मृदेव – मृत्तिका ।

**स–स्नौ प्रशंसायाम् ५।४।४०**

रूपपोऽपवादः । प्रशस्ता मृन्मृत्सा, मृत्स्ना ।

**प्रज्ञादिभ्यश्च ५।४।३८**

अण् स्यात् । प्रज्ञ एव – प्राज्ञः । दैवतः । बान्धवः ।

**पूगाञ्ञ्योऽग्रामणीपूर्वात्(१) ५।३।११२**

स्वार्थे । नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः=पूगाः । **लौहितध्वज्यः** ।

**ञ्यादयस्तद्राजाः ५।३।११९**

'तद्राजस्ये' ति लुक् । लोहितध्वजाः । "व्राते" कापोतपाक्यः । कपोतपाकाः । च्फञ् । कौञ्जायना इत्यादि ।

**बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ५।४।४२**

बहूनि ददाति– बहुशः । अल्पशः । ( **बह्वल्पार्थान्मङ्गलामङ्गलवचनम्** ) । नेह । बहुददात्यनिष्टेषु । अल्पं ददात्याभ्युदयिकेषु ।

**संख्यैकवचनाच्च (२) वीप्सायाम् ५।४।४३**

द्वौ द्वौ ददाति – द्विशः । माषं माषं ददाति–माषशः। परिमाणशब्दावृत्तावेकार्था एव । संख्यैकवचनात्किम् ? घटं घटं ददाति । वीप्सायां किम् ? द्वौ ददाति । कारकादित्येव । द्वयो–र्द्वयोः स्वामी ।

---

(१) पूगवाचकात्स्वार्थे ञ्यप्रत्ययः स्यात् । ग्रामणीवाचक पूर्वावयवकात्तु न पूगेति न स्वरूप-ग्रहणं व्याख्यानात् । लोहिताध्वजा यस्य पूगस्य स लोहितध्वजः, स एव – लौहितध्वज्यः ।

(२) संख्यावाचकाद् अन्यस्माच्चैकत्वविशिष्टवाचकात् कारकाभिधायिनः प्रातिपदिकात् वीप्सायां शस् स्यादित्यर्थः ।

## प्रतियोगे पञ्चम्यास्तसिः ५।४।४४

प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः। प्रद्युम्नः कृष्णतः प्रति। (आद्या दिभ्यस्तसेरुपसंख्यानम् (१)) आदौ–आदितः। मध्यतः। पृष्ठतः। पार्श्वतः। आकृतिगणोऽयम्। स्वरेण – स्वरतः। वर्णतः।

## कृभ्वस्तियोगे संपद्यकर्तरि च्विः ५।४।५०

(अभूततद्भाव इति वक्तव्यम्)। विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे।

## अस्य च्वौ ७।४।३२

ईत्। अकृष्णः कृष्णः सम्पद्यते तं करोति–कृष्णीकरोति। ब्रह्मीभवति। गङ्गीस्यात्। (अव्ययस्य च्वावीत्वं नेति वाच्यम्) दोषाभूतमहः। दिवा भूता=रात्रिः।

## क्यच्व्योश्च ६।४।१५२

हलः परस्यापत्ययकारस्य लोपः क्ये च्वौ च परतः। गार्गी भवति।

## च्वौ च ७।४।२६

दीर्घः। शुचीभवति। पटूस्यात्।

## अरुर्मनश्चक्षुश्चेतो–रहो–रजसां लोपश्च ५।४।५१

चात् च्विः। अरूकरोति। उन्मनीकरोति। उच्चक्षूकरोति। विचेतीकरोति। विरहीकरोति। विरजीकरोति।

## विभाषा साति कार्त्स्न्ये ५।४।५२

च्वेर्विषये सातिर्वा स्यात्साकल्ये। 'सात्पदाद्योः'। कृत्स्नं शस्त्रमग्निः सम्पद्यते–अग्निसाद् भवति, अग्नी भवति। कार्त्स्न्ये किम्? एकदेशेन शुक्लीभवति पटः।

## अभिविधौ संपदा च ५।४।५३

सम्पदा कृभ्वस्तिभिश्च योगे साति र्वा व्याप्तौ। पक्षे–कृभ्वस्तियोगे च्विः सम्पदा तु वाक्यमेव। अग्निसात्सम्पद्यते – अग्निसाद्भवति शस्त्रम्। अग्नीभवति। जलसात्सम्पद्यते–जलीभवति लवणम्।

## तदधीनवचने ५।४।५४

सातिः, कृभ्वस्तिभिः सम्पदा च योगे। राजसात्करोति। राजधीनमित्यर्थः।

---

(१) अयं सार्वविभक्तिकस्तसिः।

**देये त्रा च ५।४।५५**

तदधीने देये त्रा स्यात्सातिश्च कृादियोगे। विप्राधीनं देयं करोति–विप्रत्राकरोति ।विप्रत्रासम्पद्यते ।पक्षे–विप्रसात्करोति ।देये किम्? राजसाद्भवति राष्ट्रम् ।

**देव–मनुष्य–पुरुष–पुरु–मर्त्येभ्यो द्वितीय–सप्तम्योर्बहुलम् ५।४।५६**

एभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च त्रा स्यात् । देवत्रा वन्दे रमे वा । बहुलोक्तेरन्यत्रापि। बहुत्रा जीवतो मनः ।

**अव्यक्तानुकरणाद्व्यजवरार्धादनितौ डाच् ५।४।५७**

द्व्यच् – अवरं न्यूनं, न तु ततो न्यूनम्, अनेकाजिति यावत् । तादृशमर्धं यस्य तस्माड् डाच् कृभ्वस्तिभिर्योगे । (**डाचि बहुलं द्वे भवतः**) । डाचि विवक्षिते द्वित्वम् । (**नित्यमाम्रेडिते डाचीति वक्तव्यम्**) डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति त – पयोः पः ।पटपटाकरोति । अव्यक्तानुकरणात्किम्? ईषत्करोति ।द्व्यजवरार्धात्किम्? श्रत्करोति । अवरेति किम् ? खरटखरटाकरोति ।अनितौ किम् ? पटिति करोति ।

**कृञो द्वितीय–तृतीय–शंब–बीजात्कृषौ ५।४।५८**

द्वितीयादिभ्यो डाच् कृञो योग एव कर्षणेऽर्थे। बहुलोक्तेरव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम्। द्वितीयं तृतीयं कर्षण करोति द्वितीयाकरोति, तृतीयाकरोति। शम्बाकरोति। बीजाकरोति ।

**संख्यायाश्च गुणान्तायाः ५।४।५९**

द्विगुणाकरोति क्षेत्रम् ।

**समयाच्च यापनायाम् ५।४।६०**

कृषाविति निवृत्तम्। समयाकरोति=कालं यापयतीत्यर्थः ।

**सपत्र–निष्पत्रादतिव्यथने ५।४।६१**

सपत्राकरोति मृगम्=सपुङ्खशरप्रवेशनेन सपत्रं करोतीत्यर्थः। निष्पत्राकरोति=सपुङ्खस्य शरस्याऽपरपार्श्वे निर्गमनान्निष्पत्रं करोतीत्यर्थः। अतिव्यथने किम्?सपत्रं निष्पत्रं वा करोति भूतलम्।

**निष्कुलान्निष्कोषणे ५।४।६२**

निष्कुलाकरोति दाडिमम् । निर्गतं कुलम्=अन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच्।

**सुख–प्रियादानुलोम्ये ५।४।६३**

सुखाकरोति, प्रियाकरोति गुरुम्=अनुकूलाचरणेनानन्दयतीत्यर्थः ।

---

(१) सुखशब्दात् प्रियशब्दाच्च डाच् स्यादानुलोम्ये कृञोयोगे इत्यर्थः ।

**दुःखात्प्रातिलोम्ये (१) ५।४।६४**

शूलाकरोति = स्वामिनम् पीडयतीत्यर्थः ।

**शूलात्पाके ५।४।६५**

शूलाकरोति (२) शूलेन = पचतीत्यर्थः।

**सत्यादशपथे ५।४।६६**

सत्याकरोति भाण्डं वणिक् = क्रेतव्यमिति तथ्यं करोतीत्यर्थः। शपथे तु सत्यं करोति विप्रः।

**मद्रात्परिवापणे (३) ५।४।६७**

मद्रशब्दो मङ्गलार्थः। परिवापणं = मुण्डनम् मद्राकरोति कुमारम् = माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः। (**भद्राच्चेति वक्तव्यम्** (४) ) भद्राकरोति। अर्थः प्राग्वत् (५)। परिवापणे किम् ? मद्रं करोति, भद्रं करोति।

## ॥ इति स्वार्थिकाः ॥

## ॥ इति तद्धितप्रक्रिया ॥

### अभ्यासः

**प्र० १. पञ्चकृत्वो भुङ्क्ते–इति प्रयोगे 'पञ्चकृत्व' इति कथं सिध्यति ?**

उ० पञ्चकृत्वो भुङ्क्ते–इत्यत्र पञ्च वारान् भुङ्क्त इति विग्रहे 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति स्वार्थे पञ्चन् शब्दात् कृत्वसुच् प्रत्यये चकारोकारयोरित्संज्ञायां लोपे च नकारस्य च लोपे पञ्चकृत्वस् इत्यस्याव्ययत्वे सस्य रुत्वोत्वयोरुक्तरूपं निष्पन्नम् ।

**प्र० २. मृत्सा–इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ० मृत्सा–इत्यत्र प्रशस्ता मृत् इति विग्रहे प्रथमान्ताद् मृत् शब्दात् 'प्रशंसायां रूपप्' इति प्राप्तं रूपं प्रबाध्य 'स–स्नौ प्रशंसायाम्' इति सप्रत्यये स्त्रीत्वविवक्षायां टापि रूपं साधु ।

**प्र० ३. कृष्णीकरोति – अयं प्रयोगः सविग्रहं ससूत्रं च्वि प्रत्यय प्रदर्शनपूर्वकं निष्पाद्यताम्**

उ०– अकृष्णः कृष्णः सम्पद्यते तं करोति इति विग्रहे कृष्णशब्दात् 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इति च्विप्रत्यये तस्य सर्वापहारिलोपे 'अस्य च्वौ' इत्यवर्णस्य ईत्वे कृष्णीकरोति इति सिद्धम् ।

---

(१) डाजिति शेषः। आराध्यप्रतिकूलाचरणम् = प्रातिलोम्यम् ।

(२) अत्र करोतिः पाकेऽर्थे वर्तते ।

(३) डाच् स्यादिति शेषः।

(४) भद्रशब्दाच्च डाच् इत्यर्थः ।

(५) माङ्गल्यमुण्डनेन (चौलेन) संस्करोतीत्यर्थः। भद्रमद्रशब्दौ मङ्गलार्थौ पर्यायौ।

प्र० ४. अग्निसाद्भवति – इति प्रयोग: कथं सिध्यति ?

उ०– कृत्स्नं शस्त्रमग्नि: सम्पद्यते – इति विग्रहे भवत्युत्तरपदे अग्नि शब्दात् 'विभाषा साति कार्त्स्न्ये, इति विकल्पेन सातिप्रत्यये इकारस्येत्संज्ञायां लोपे चाव्ययत्वे अग्निसाद्भवति, सात्यभावे अग्नि शब्दात् च्वि प्रत्यये 'च्वौ चे' ति दीर्घे अग्नीभवति–इति रूपद्वयं निष्पन्नम् ।

## अभ्यासार्थं प्रश्ना:

(१) अन्नमयम्, त्रिर्भुङ्क्ते, नूत्नम्, देवता, मृत्तिका–एते प्रयोगा: ससूत्रप्रत्ययनिर्देशं साध्या:

(२) 'पादार्घाभ्यां च' अस्य सूत्रस्यार्थं वर्णयित्वोदाहरणद्वयं साध्यताम् ।

(३) अधोलिखित सूत्राणामर्थानुदाहरणानि च लिखत
'शाखादिभ्यो य:' 'प्रज्ञादिभ्यश्च' तदधीनवचने ।

(४) कुशाग्रीय:– इति प्रयोग: ससूत्रनिर्देशं साध्य: ।

(५) सकृद्भुङ्क्ते– इति प्रयोग: कथं सिध्यति ?

(६) अधस्तन विग्रहेषु रूपाणि लिख्यन्ताम्
अल्पं ददाति, द्वौद्वौ ददाति, अपटु: पटु: यथा सम्पद्यते तथा स्यात्, द्वितीयं कर्षणं करोति, सपत्रं करोति मृगम् ।

(७) 'मद्रात्परिवापणे' इति सूत्रस्याभिप्रायो लेख्य: ।

# अथ द्विरुक्तप्रक्रिया

**सर्वस्य द्वे ८।१।१**

इत्यधिकृत्य ।

**परेर्वर्जने ८।१।५**

परेर्वर्जनेऽर्थे द्वे स्तः । परि परि वङ्गेभ्यो (१) वृष्टो देवः ।

**उपर्यध्यधसः सामीप्ये(२) ८।१।७**

उपर्युपरि ग्रामम्, ग्रामस्योपरिष्टात् समीपदेशे इत्यर्थः । अध्यधि—सुखम् । सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः । अधोऽधो— लोकम्, लोकस्याधस्तात् समीपदेशे इत्यर्थः ।

**वाक्यादे रामन्त्रितस्यासूया—सम्मति—कोप—कुत्सन—भर्त्सनेषु (३) ८।१।८**

सुन्दर ! सुन्दर !! वृथा ते सौन्दर्यम् । देव ! देव !! वन्द्योऽसि । दुर्विनीत ! दुर्विनीत !! इदानीं ज्ञास्यसि । धानुष्क ! धानुष्क !! वृथा ते धनुः । चोर ! चोर !! घातयिष्यामि त्वाम् ।

**एकं बहुव्रीहिवत् ८।१।९**

द्विरुक्त एकशब्दो बहुव्रीहिवत् । तेन सुब्लोपपुंवद्भावौ । एकैकमक्षरम् । इह द्वयोरपि सुपोर्लुकि सति बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्समुदायात्सुप् एकैकयाऽऽहुत्या । तच्च एकवचनमेव ।

**आबाधे च ८।१।१०**

पीडायां द्वे स्तो बहुव्रीहिवच्च । गतगतः । गतगता ।

**प्रकारे गुणवचनस्य ८।१।१२**

सादृश्ये द्योत्ये गुणवचनस्य द्वेस्तस्तच्च कर्मधारयवत् । पटुपट्वी । पटुपटुः = पटुसदृशः, ईषत्पटुरिति यावत् । (आनुपूर्व्ये द्वे वाच्ये) मूले मूले स्थूलः (४)। (संभ्रमेण प्रवृत्तौ

---

(१) 'अपपरीबर्जने' इति परीत्यस्य कर्मप्रवचनीयता 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । बङ्गान्परित्यज्य (अन्यत्र) वृष्ट इत्यर्थः ।

(२) उपरि अधि अधः— इत्येतेषां सामीप्ये (देशकृते कालकृते वा) गम्ये द्वेस्तः इत्यर्थः।

(३) सम्बोधनप्रथमान्तस्य 'साऽऽमन्त्रितम्' इत्यनेन—आमन्त्रितसंज्ञा । वाक्यादौ प्रयुज्यमानस्य आमन्त्रितस्य असूया—सम्मति—कोप—कुत्सन-भर्त्सनेषु गम्येषु द्वेस्त इत्यर्थः ।

(४) पूर्वपूर्वो भाग उत्तरोत्तरमूल भागापेक्षया स्थूल इत्यर्थः ।

**यथेष्टमनेकधा प्रयोगा न्यायसिद्धः** (१))। सर्प २ बुध्यस्व । सर्प ३ बुध्यस्व ३। (**कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्**) बहुलग्रहणादन्यपरयोर्न समासवत् । इतरशब्दस्य तु नित्यम् । (**असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः**) अन्योन्यं विप्रा नमन्ति (२)। अन्योन्यौ । अन्योन्येन कृतम् । अन्योन्यस्मै दत्तमित्यादि । (**स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वाच्यः**) अन्योन्याम् । अन्योन्यम् । परस्पराम्, परस्परम् । इतरेतराम् इतरेतरम्—वा इमे ब्राह्मण्यौ कुले वा भोजयतः ।

**दलद्वये टाबभावः क्लीबे चाद्ड्विरहः स्वमोः ।**
**समासे सोरलुक् चेति सिद्धं बाहुलकात्त्रयम् ॥**

अन्योन्यमित्यादौ दलद्वये टाप् । अद्ड्तरे त्यद्ड् च प्राप्तः । 'अन्योन्यसंसक्तमहस्त्रियामम्' । अन्योन्याश्रयः । परस्पराक्षिसादृश्यम् । अदृष्टपरस्परैरित्यादौ सोर्लुक् च प्राप्तः । सर्वं बाहुलकात्समाधेयम् ।

## ॥ इति द्विरुक्तप्रक्रिया ॥

### अभ्यासः

**प्रश्न १. उपर्युपरि ग्रामम्—इत्यस्यार्थ प्रदर्शनपूर्वकं द्वित्वप्रकारो वर्ण्यताम्**

उ० – उपर्युपरि ग्राममित्यत्र 'उपर्यध्यधसः सामीप्ये' इति सूत्रेण द्वित्वम् । ग्रामस्योपरिष्टात्समीपदेशे इत्यर्थः ।

**प्रश्न २. पटुपट्वी, पटुपटुः—अनयोः सिद्धप्रकारो वर्णनीयः**

उ० – पट्वीसदृशीति विग्रहे सादृश्यद्योत्ये 'प्रकारे गुणवचनस्ये' ति 'पट्वी' इत्यस्य द्वित्वे कर्मधारयवत्त्वे च पूर्वभागस्य पट्वीशब्दस्य 'पुंवत्कर्मधारय' इत्यनेन पुंवद्भावे पटुपट्वी, पुंस्त्व विवक्षाया तु द्वित्वमात्रे पटुपटुः= पटुसदृशः, ईषत्पटुरिति यावत् ।

---

(१) सम्भ्रमेण ( भयादिकृतया त्वरया ) प्रवृत्तौ गम्यमानायां, यथेष्टम्=इच्छानुसारेण, अनेकधा=बहुवारं शब्दः प्रयोक्तव्य इति वक्तव्यमित्यर्थः । न्यायसिद्धः– यावद्वारं प्रयोगे सति बोद्धा अर्थं प्रत्येति तावद्वारं प्रयोगः कर्तव्य इत्यर्थः ।

(२) द्वितीयान्तस्य अन्यशब्दस्य द्वित्वे 'अन्यम् – अन्यम्' इति बाहुलकत्वेन समासवत्वाभावे 'असमासवद् इति वार्तिकेन' पूर्वखण्डे द्वितीयैक वचनस्य 'अम्' इत्यस्य सुरादेशः, रुत्वम्, अतो रोरिति उत्वे पूर्वरूपे अन्योऽन्यम्–इति । एवमग्रेऽपि ।

## अभ्यासार्थं प्रश्नाः

(१) 'परेर्वर्जने' इति सूत्रस्यार्थं प्रदर्श्योदाहरणं देयम् ।

(२) धानुष्क ! धानुष्क !! वृथा ते धनुः इत्यत्र, सर्प ! सर्प !! सर्प !!! बुध्यस्व बुध्यस्व बुध्यस्व–इत्यत्र च केन सूत्रेण वा वार्तिकेन द्वित्रावृत्ति सिद्धिः ?

(३) अधस्तनश्लोकस्याभिप्राय उदाहरणप्रदर्शनपूर्वकं वर्णनीयः

दलद्वये टाबभावः क्लीबे चादड्विरहः स्वमोः ।
समासे सोरलुक् चेति सिद्धं बाहुलकात्त्रयम् ॥

# अथ स्त्रीप्रत्ययप्रकरणम्

**स्त्रियाम् ४।१।३**

अधिकारोऽयम् । समर्थानामिति यावत् ।

**अजाद्यतष्टाप् ४।१।४**

अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् । अजादिभिः स्त्रीत्वस्य विशेषणान्नेह, –पञ्चाजी । अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम् । अतः–अजा । खट्वा । एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होडा । मन्दा । विलाता । (**सं–भस्त्राजिन–शण–पिण्डेभ्यः फलात्**) । संफला (१) । भस्त्रफला (२), इत्यादि । (**सदच्–काण्ड–प्रान्त–शतैकेभ्यः पुष्पात्**) । सत्पुष्पा (३) । प्राक्पुष्पा (४) । प्रत्यक्पुष्पा (५) । (**शूद्रा चामहत्पूर्वा जातिः**) पुंयोगे तु,–शूद्री । अमहत्पूर्वा किम् ? महाशूद्री (६) । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा । कनिष्ठा । मध्यमेति पुंयोगेऽपि । कोकिला जातावपि । (**मूलान्नञः**) । अमूला ।

**उगितश्च ४।१।६**

ङीप् । भवन्ती । पचन्ती ।

**वनो र च ४।१।७**

वन्नन्तात्तदन्ताच्च ङीप् स्याद्रश्चान्तादेशः । सुत्वानमतिक्रान्ता–अतिसुत्वरी (७) । अतिधीवरी । शर्वरी (८) । (**वनो न हश इति वक्तव्यम्**) । अवावा ब्राह्मणी । राजयुध्वा ।। (**बहुव्रीहौ वा**) । बहुधीवा । बहुधीवरी ।

---

(१) समृद्धानि फलानि यस्या इति विग्रहः ।

(२) भस्त्रा एव फलानि यस्या इति विग्रहः । 'भस्त्रा चर्मप्रसेविका' इत्यमरः ।

(३) सन्ति पुष्पाणि यस्या इति विग्रहः ।

(४) प्राञ्चि पुष्पाणि यस्या इति विग्रहः ।

(५) प्रत्यञ्चि पुष्पाणि यस्या इति विग्रहः ।

(६) महती च सा शूद्रा चेति विग्रहः । 'पुंवत्कर्मधारय' इति पुंवत्वम् । अत्र महत्पूर्वत्वान्न टाप् । किन्तु जाति लक्षणो ङीषेव । आभीरी तु महाशूद्री जातिपुंयोगयोः समा इत्यमरः ।

(७) सुत्वानमतिक्रान्ता इति विग्रहे 'अत्यादयः' इति समासः । सुब्लुकि ङीप् नकारस्य रत्वम्, अतिसुत्वरी इति ।

(८) 'शॄ हिंसायाम्' इति धातोः 'आतो मनिन्क्वनिब्वनिपश्च' 'अन्येभ्योऽपि दृश्यते' इति वनिप्, 'सार्वधातुकार्धधातुकयोः' इति गुणः 'वनो र च' इति ङीप् रश्च । शर्वरी इति ।

**पादोऽन्यतरस्याम् ४।१।८**

द्विपदी (१), द्विपात् ।

**टाबृचि ४।१।९**

द्विपदा ऋक् । एकपदा ।

**मनः ४।१।११**

मन्नन्तान्न ङीप् । सिमानौ ।

**अनो बहुव्रीहेः ४।१।१२**

अन्नन्ताद्बहुव्रीहेर्न ङीप् । बहुयज्वा । बहुयज्वानौ ।

**डाबुभाभ्यामन्यत्तरस्याम् ४।१।१३**

सूत्रद्वयोपाताभ्यां डाब् वा । सीमा । सीमे, सीमानौ । दामे, दामानौ ।

**अन उपधालोपिनोऽन्यतरस्याम् ४।१।२८**

अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप् । पक्षे डाब्–निषेधौ । बहुराज्ञी (२), बहुराज्ञ्यौ । बहुराजा । बहुराजानौ ।

**प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ७।३।४४**

प्रत्ययस्थात्ककारात्पूर्वस्याऽकारस्येकारः स्यादापि परे स आप्सुपः परो न चेत् । सर्विका (३) । कारिका । अतः किम् ? नौका । प्रत्ययस्थात् किम् ? शक्नोतीति शका । असुपः किम् ? बहुपरिव्राजका नगरी । **(मामकनरकयोरुपसंख्यानम्)** । मामिका (४) । नरिका । **(त्यक्-त्यपोश्च)** । दाक्षिणात्यिका । इहत्यिका (५) ।

---

(१) ङीपि भत्वात् 'पादः पत्' इति पाच्छब्दस्य पदादेशः ।

(२) ङीपि अल्लोपे सोर्हल्ङ्याब्भ्यो दिलोपः , इति भावः ।

(३) सर्वशब्दाट्टापि पूर्वसवर्णदीर्घे सर्वाशब्दः । एकादेशस्य पूर्वान्तत्वेन ग्रहणात् सर्वनामकार्यम् । ततश्च टेः प्राग कच् । तत्र ककारादकार उच्चारणार्थः । चकार इत् । अक् इति ककारान्तः प्रत्ययो टेः प्राग्भवति । सर्वका शब्देऽस्मिन् ककारात्पूर्वस्य अत इत्वे सर्विकेति रूपम् ।

(४) ममेयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्यां खञ् च' इत्यणि 'तवकममकावेकवचने' इति ममकादेशे, आदिवृद्धिः टाप् ।

(५) 'अव्ययात्त्यप्' इति त्यप् ।

**न यासयोः ७।३।४५**

यत्तदोरस्येन्न । यका (१) । सका । यकाम् । तकाम् । (**त्यकनश्च निषेधः**) । उपत्यका। अधित्यका। (**आशिषि वुनश्च न**) । जीवका। भवका। (**उत्तरपदलोपे न**) । देवदत्तिका—देवका(२) । (**क्षिपकादीनां च**) क्षिपका। ध्रुवका। चटका। कन्यका(३) । (**तारका ज्योतिषि**) । (**वर्णका तान्तवे**) ।— (**वर्तका शकुनौ प्राचाम्**) । (**अष्टका पितृदेवत्ये**) ।— (**सूतका पुत्रिका वृन्दारकाणां वेति वक्तव्यम्**) । एषां वा अकारो भवतीत्यर्थः। सूतिका, सूतकेत्यादि ।

**उदीचामातः स्थाने यकपूर्वायाः ७।३।४६**

यकपूर्वस्य स्त्रीप्रत्ययस्यातऽऽस्थाने योऽत् तस्य कात्पूर्वस्येद्वाऽऽपि परे । 'केऽण' इति ह्रस्वः । आर्यका । आर्यिका । चटकका(४) ।, चटकिका। आतः किम् ? सांकाश्ये भवा=सांकाश्यिका(५) । यकेति किम् ? अश्विका। स्त्रीप्रत्ययस्य किम् ? शुभंयिका ।

**अभाषितपुंस्काच्च ७।३।४८**

एतस्माद्विहितस्यातः स्थानेऽत इद्वा। गङ्गका। गङ्गिका।

**आदाचार्याणाम् ७।३।४९**

पूर्वविषये। गङ्गाका ।

**अनुपसर्जनात् ४।१।१४**

अधिकारोऽयं युनस्तिरित्यभिव्याप्य ।

**टिड्ढाणञ्द्वयसज्–दघ्नञ्–मात्रच्–तयप् ठक्–ठञ्–कञ्–क्वरपः ४।१।१५**

अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं ततो ङीप् । कुरुचरी(६) । उपसर्जनत्वान्नेह । बहुकुरुचरा। नदट्—नदी । देवट्—देवी । सौपर्णेयी(७) । ऐन्द्री(८) । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । लावणिकी । यादृशी । इत्वरी ।

---

(१) यत्तदोरकच् । त्यदाद्यत्वे टाप् ।

(२) देवदत्तशब्दात् स्वार्थे कः । टाजादावर्ध्वं द्वितीयादचः' 'अनजादौ च विभाषा लोपो वक्तव्यः' इति दत्तशब्दलोपः । ततः टाप् । देवदत्तिकेति तु दत्तपदस्य लोपाभिव्यक्तये उपन्यस्तम् ।

(३) कन्याशब्दात् कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप् ।

(४) चट भेदने। पचाद्यच्, टाप् स्वार्थे कः, 'केऽणः' इति ह्रस्वः पुनष्टाप् ।

(५) सङ्काशेन निर्वृत्तं नगरं साङ्काश्यम्। शाङ्काश्य शब्दात् भवार्थे 'धन्वयोपधाद्वुञ्' अकादेशः, यस्येति च इत्यकारलोपः टाप् प्रत्ययस्थात्' इति नित्यमित्त्वम् ।

(६) कुरुषु चरतीति अधिकरणोपपदे 'चरेष्टः' इति कर्तरि टः ।

(७) सुपर्णीशब्दादपत्येऽर्थे 'स्त्रीभ्यो ढक्' । आयनेयी' एत्येयादेशः ।

(८) इन्द्रो देवता अस्याः । साऽस्य देवतेत्यण् ।

(नञ्-स्नञीकक्-ख्युंस्तरुण-तलुनानामुपसंख्यानम्) स्त्रैणी। पौंस्नी। शाक्तीकी। आढ्यङ्करणी। तरुणी। तलुनी।

**यञश्च ४।१।१६**

यञन्तात्प्रातिपदिकाद् ङीप्। अकारलोपे कृते।

**हलस्तद्धितस्य ६।४।१५०**

हल उत्तरस्योपधाभूतस्य तद्धितयकारस्य लोप इति। गार्गी।

**प्राचां ष्फ तद्धितः ४।१।१७**

यञन्तात्ष्फो वा।

**षः प्रत्ययस्य १।३।६**

प्रत्ययादिः ष इत्स्यात्। आयनेयीनीत्यायनादेश षित्वसामर्थ्यात्षिद्गौरेति ङीष्। गार्ग्यायणी।

**वयसि प्रथमे ४।१।२०**

प्रथमवयोवाचिनोऽदन्तात् ङीप् स्यात्। कुमारी। **(वयस्य चरम इति वाच्यम्)**। वधूटी। चिरण्टी।

**द्विगोः ४।१।२१**

अदन्तात् द्विगोर्ङीप्। त्रिलोकी। अजादित्वात् त्रिफला। त्र्यनीका सेना।

**अपरिमाण-बिस्ताचित-कम्बल्येभ्यो न तद्धितलुकि ४।१।२२**

अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगो न ङीप् तद्धितलुकि। पञ्चाभिरश्वैः क्रीता पञ्चाश्वा(१)। (आर्हीयष्ठक्)। अध्यर्धेति लुक्। द्वौ बिस्तौ पचति द्विबिस्ता। द्व्याचिता द्विकम्बल्या। परिमाणान्तस्तु द्व्याढकी। तद्धित लुकि किम्? समाहारे पञ्चाश्वी।

**काण्डान्तात्क्षेत्रे ४।१।२३**

क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि। द्वे काण्डे प्रमाणमस्या द्विकाण्डा= क्षेत्रभक्तिः। मात्रचः- 'प्रमाणे लो द्विगोर्नित्यम्' इति लुक्। क्षेत्रे किम्" द्विकाण्डि(२) रज्जुः।

---

(१) पञ्चभिरश्वैः क्रीतेति विग्रहे 'तद्धितार्थ' इति द्विगुः। 'आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्' इत्यधिकारे 'तेन क्रीतम्' इति ठक् 'अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम्' इति तस्य लुक् 'द्विगोः' इति प्राप्तस्य ङीपः अपरिमाणान्त द्विगुत्वात् 'अपरिमाण' इति निषेधः। ततष्टाप्

(२) मात्रचो लुकि, ततः 'द्विगोः' इति ङीप् क्षेत्रे वृत्तित्वाभावात् न तन्निषेध इति भावः।

**पुरुषात्प्रमाणेऽन्यतरस्याम् ४।१।२४**

प्रमाणे यः पुरुषस्तदन्ताद् द्विगोर्ङीब्वा स्यात्तद्धितलुकि। द्वौ पुरुषौ प्रमाणमस्याः द्विपुरुषी, द्विपुरुषा वा परिखा ।

**ऊधसोऽनङ् ५।४।१३**

ऊधोऽन्तस्य बहुव्रीहेरनङ स्त्रियाम् ।

**बहुव्रीहेरूधसोङीष् ४।१।२५**

ऊधोऽन्ताद्बहुव्रीहेः । कुण्डोध्नी(१) । स्त्रियां किम् ? कुण्डोधो धैनुकम्(२) ।

**दामहायनान्ताच्च ४।१।२७**

संख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप् । द्विदाम्नी । द्विहायनी बाला। (**त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्**)। वयोवाचकहायनस्य ङीप् णत्वं चेष्यते । त्रिहायणी । चतुर्हायणी । वयसोऽन्यत्र । त्रिहायना । चतुर्हायना शाला ।

**अन्तर्वत्पतिवतोर्नुक् (३)४।१।३२**

नान्तत्वान्ङीप् । अन्तर्वत्नी । पतिवत्नी । गर्भभर्तृसंयोग एवेष्यते । अन्यत्र तु। अन्तरस्त्यस्यां शालायां घटः । पतिमती पृथिवी ।

**पत्युर्नो यज्ञसंयोगे ४।१।३३**

वसिष्ठस्य पत्नी ।

**विभाषा सपूर्वस्य ४।१।३४**

पतिशब्दान्तस्य नो वा । गृहपत्नी, गृहपतिः (४) । दृढपत्नी, दृढपतिः ।

**नित्यं सपत्न्यादिषु ४।१।३५**

सपत्नी । एकपत्नी । वीरपत्नी (५) ।

---

(१) अनङि कृते ङीषि 'अल्लोपोऽनः' इति भावः। 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। ङीष्विधेस्तु स्वरे विशेषः ।

(२) कुण्डमिव ऊधो यस्येति विग्रहः । धेनूनां समूहः । अचित्त हस्ति धेनोष्ठक्' 'इसुसुक्तान्तात्कः' आदिवृद्धिः । क्लीबत्वं लोकात् । अत्र स्त्रीत्वाभावान्न ङीषित्यर्थः ।

(३) कित्वसामर्थ्यात् अयमागमः, न तु प्रत्ययः इति ।

(४) नत्वपक्षे 'ऋन्नेभ्यो ङीप्' इति ङीप् ।

(५) वीरः पतिर्यस्या इति विग्रहः । सपत्नादित्वान्नत्वम् ।

**पूतक्रतोरै च ४।१।३६**

पूतक्रतोः स्त्री पूतक्रतायी (१)।

**वृषाकप्यग्नि – कुसित–कुसिदानामुदात्तः ४।१।३७**

एषामुदात्त ऐ – आदेशो ङीप् च। वृषाकपेः स्त्री वृषाकपायी। अग्नायी। कुसितायी। कुसिदायी।

**मनोरौ वा ४।१।३८**

मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्च वा ङीप। मनायी (२)। मनावी, मनुः।

**वर्णादनुदात्तात्तोपधात्तो नः ४।१।३९**

वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्ताद्वा ङीप् तकारस्य नः। एता, एनी। रोहिता, रोहिणी।

**षिद्गौरादिभ्यश्च ४।१।४१**

ङीष्। नर्तकी। गौरी। अनडुही। अनड्वाही (पिप्पल्यादयश्च) आकृतिगणोऽयम्। (मत्स्यस्य ङ्याम्)। यलोपः– मत्सी।

**जानपद–कुण्ड–गोण–स्थल–भाज–नाग–काल–नील-कुश-कामुक-कबराद् वृत्यमत्रावपनाकृत्रिमा – श्राणा – स्थौल्य – वर्णानाच्छादनाऽयोविकार – मैथुनेच्छा केशवेशुषु ४।१।४२**

एकादशभ्यः क्रमाद् वृत्यादिष्वर्थेषु ङीष्। जानपदी वृत्तिश्चेत्। अन्या जानपदी, अन्तोदात्तत्वात् ङीपि आद्युदात्तः कुण्डी अमत्रं चेत्। कुण्डाऽन्या। गोणी आवपनं चेत् गोणाऽन्या। स्थली आकृतिमा चेत्। स्थलाऽन्या। भाजी श्राणा चेत्। भाजाऽन्या। 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः। नागी स्थूला चेत्। नागाऽन्या। काली वर्णश्चेत्। कालाऽन्या। नीली अनाच्छादनं चेत्। नीलाऽन्या, नील्या रक्ता शाटीत्यर्थः। कुशी अयोविकारश्चेत्। कुशाऽन्या। कामुकी मैथुनेच्छावती चेत्। कामुकाऽन्या। कबरी केशानां सन्निवेशविशेषश्चेत्। कबराऽन्या।

**शोणात्प्राचाम् (४) ४।१।४३**

शोणी। शोणा।

---

(१) पूतः क्रतुर्येन स पूतक्रतुः, तस्य स्त्रीत्यर्थे ङीप् तकारादुकारस्य ऐकारः, तस्य आयादेश इति भावः।

(२) मनोस्त्रीति विग्रहे ङीपि ऐकारे – मनायी, औकारे मनावी, ङीबभावे – मनुः।

(३) मत्स्य शब्दाद् गौरादित्वात् ङीषि, यलोपः, 'यस्येति च' इति अलोपः, मत्सी।

(४) 'शोणः कोकनदच्छविः' इत्यमरः। 'वर्णानां तणतितितान्तानाम्' इति शोणशब्द आद्युदात्तः, अनुदात्तान्तः। 'अन्यतो ङीष्' इति नित्यं ङीषि प्राप्ते विकल्पार्थमिदम्।

### वोतो गुणवचनात् ४।१।४४

उदन्तात् गुणवाचिनो वा ङीष् । मृद्वी । मृदुः । उतः किम् ? शुचिः । तिगुणे किम् ? आखुः । (खरु–संयोगोपधान्न) । खरुः (१) । पाण्डुः ।

### बह्वादिभ्यश्च ४।१।४५

वा ङीष् । बह्वी । बहुः । (कृदिकारादक्तिनः) । रात्री (२) । रात्रिः । (सर्वतोऽक्तिन्नर्थादित्येके) । शकटी । शकटिः ।

### पुंयोगादाख्यायाम् ४।१।४८

या पुमाख्या पुंयोगात्स्त्रियां वर्तते ततो ङीष् । गोपस्य स्त्री=गोपी । (पालकान्तान्न) । गोपालिका (३) । अश्वपालिका । (सूर्याद्देवतायां चाप्) । सूर्यस्य स्त्री देवता=सूर्या । देवतायां किम् ? सूरी (४), कुन्ती, मानुषीयम् ।

### इन्द्र-वरुण-भव-शर्व-रुद्र-मृड–हिमारण्य–यव–यवन–मातुलाचार्याणामानुक् ४।१।४९

ङीष् च । इन्द्राणी (५) । (हिमारण्ययोर्महत्त्वे) । महद्धिमं=हिमानी । (यवाद्दोषे) । दुष्टो यवो–यवानी । (यवनाल्लिप्याम्) । यवनानां लिपिर्यवनानी । (मातुलोपाध्याययोरानुग्वा) । मातुलानी, मातुली । उपाध्यायानी, उपाध्यायी । (आचार्यादणत्वं च) । आचार्यानी । (अर्य–क्षत्रियाभ्यां वा स्वार्थे) । अर्याणी, अर्या । क्षत्रियाणी, छत्रिया । पुंयोगे तु–अर्यी । क्षत्रियी ।

### क्रीतात्करणपूर्वात् ४।१।५०

क्रीतान्ताददन्तात्करणादेर्ङीष् । वस्त्रक्रीती । क्वचिन्न–धनक्रीता ।

### बहुव्रीहेश्चान्तोदात्तात् ४।१।५२

क्तान्ताद् ङीष् । ऊरुभिन्नी (६) ।

---

(१) खरुः=पतिंवरा कन्या । पाण्डुः=श्वेता इत्यर्थः ।

(२) 'राशादिभ्यां त्रिप्' इति राधातोः औणादिकत्रिप्रत्ययान्तात् ङीषि–रात्री । पक्षे ङीषभावे रात्रिः ।

(३) गोपालकस्य स्त्री, अश्वपालकस्य स्त्रीति विग्रहौ ।

(४) पुंयोगादिति ङीषि, सूर्यतिष्येति यलोपः ।

(५) इन्द्रस्य स्त्रीति विग्रहः । ङीप्, कित्वादन्त्यावयव आनुक् 'आन्' इति अवशिष्यते, सवर्णदीर्घः, णत्वम्–इन्द्राणी ।

(६) ऊरू भिन्नौ=असंयुक्तौ यस्याः सा ऊरुभिन्नी । जाति कालसुखादिभ्यः परा निष्ठा वाच्या इति वार्तिकात् न पूर्वनिपातो निष्ठायाः ।

## अश्वाङ्गपूर्वपदाद्वा ४।१।५३

पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् । सुरापीती, सुरापीता ॥

## स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४।१।५४

असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्ताद् वा ङीष् । अतिकेशी (१), अतिकेशा । चन्द्रमुखी, चन्द्रमुखा । संयोगोपधात्तु–सुगुल्फा (२) ।

**अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।**
**अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम् ॥**

सुस्वेदा, द्रवत्वात् । सुज्ञाना, अमूर्तत्वात् । सुमुखा, शाला, अप्राणिस्थत्वात् । सुशोफा, विकारजत्वात् । सुकेशी, सुकेशा वा रथ्या, अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् । सुस्तनी, सुस्तना वा प्रतिमा, प्राणिवित्प्रासणिदृशे स्थितत्वात् ॥

## नासिकोदरौष्ठ–जङ्घा–दन्त–कर्ण–शृङ्गाच्च ४।१।५५

वा ङीष् । तुङ्गनासिकी, (३) तुङ्गनासिका । (**पुच्छाच्च**(४)) । सुपुच्छी, सुपुच्छा । (**कबर–मणि–विष–शरेभ्यो नित्यम्**) । कबरपुच्छी । (**उपमानात्पक्षाच्च पुच्छाच्च**) । उलूकपक्षी शाला । उलूकपुच्छी सेना ।

## न क्रोडादिबह्वचः ४।१।५६

क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा (५) । आकृतिगणोऽयम् । सुजघना ।

## सह–नञ्–विद्यमानपूर्वाच्च ४।१।५७

न ङीष् । सकेशा (६) । अकेशा विद्यमाननासिका ।

---

(१) केशानतिक्रान्ता इति विग्रह 'अत्यादयः क्रान्ताद्यर्थे' इति समासः 'एकविभक्तिचापूर्वनिपाते' इति केशशब्दस्योपसर्जनत्वम् ।

(२) सु=शोभनौ गुल्फौ=घुटिके यस्याः । सा=सुगुल्फा अत्र गुल्फशब्दस्य संयोगोपधान्न ङीष् ।

(३) तुङ्गा=उन्नता नासिका यस्या इति विग्रहः । एवं कृशोदरी, कृशोदरा, बिम्बोष्ठी, बिम्बोष्ठा । दीर्घजङ्घी, दीर्घजङ्घा इत्यादयः ।

(४) वा ङीष् इति शेषः ।

(५) कल्याणी क्रोडा=उरःस्थलं यस्याः सा । कल्याण क्रोडा वडवा, पूर्वपदे पुंवद्भावः ।

(६) 'वोपसर्जनस्य' इति सहशब्दस्य सभावः ।

**नख-मुखात् संज्ञायाम् ४।१।५८**

ङीष् न । शूर्पणखा (१)। गौरमुखा । संज्ञायाम् किम् ? ताम्रमुखी कन्या ।

**वाहः ४।१।६१**

वाहन्ताद् ङीष् । दित्यौही ।

**सख्यशिश्वीति भाषायाम् ४।१।६२**

सखी (२)। अशिश्वी (३) ।

**जातेरस्त्रीविषयादयोपधात् ४।१।६३**

जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततो ङीष् ।

**आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।**
**सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥**

घटी । वृषली । औपगवी । कठी । जातेः किम् ? मुण्डा। अस्त्रीविषयात् किम् ? बलाका। अयोपधात् किम् ? क्षत्रिया । (**योपधप्रतिषेधे हय-गवय-मुकय-मनुष्य-मत्स्यानामप्रतिषेधः**) । हयी । गवयी । मुकयी । मनुषी (४)। मत्सी ।

**पाक-कर्ण-पर्ण-पुष्प-फल-मूल-वालोत्तरपदाच्च ४।१।६४**

पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष् । ओदनपाकी । शङ्कुकर्णी। शालपर्णी । शङ्खपुष्पी । दासीफली। दर्भमूली । गोवाली ओषधिविशेषे रूढाः ।

**इतो मनुष्यजातेः ४।१।६५**

ङीष्। दाक्षी (५)।

---

(१) 'पूर्वपदात् संज्ञायाम्' इति णत्वम् ।

(२) सखिशब्दात् ङीषि 'यस्येति च' इतीकारलोपे सखी ।

(३) न विद्यते शिशुर्यस्याः सा=अशिश्वी, ङीषि उकारस्य यण् ।

(४) मनुष्यशब्दात् ङीषि मनुष्य ई इति स्थिते 'हलस्तद्धितस्येति यलोपे 'यस्येति च' इत्यलोप मनुषी इति रूपम् ।

(५) दक्षस्यापत्यम् इत्यर्थे 'अत इञ्' इति इञ् आदिवृद्धौ, स्त्रियां दाक्षिशब्दात् ङीषि 'यस्येति च' इति इकारलोपे दाक्षी।

## ऊङुतः ४।१।६६

उकारान्तादयोपधान्मनुष्यजातिवाचिन ऊङ्। कुरूः (१)।

## पङ्गोश्च ४।१।६८

पङ्गूः। (श्वशुरस्योकाराकारलोपश्च) चादूङ्। पुंयोगलक्षणङीषोऽपवादः। श्वश्रूः।

## ऊरूत्तरपदादौपम्ये ४।१।६९

उपमानवाचि–पूर्वपदमूरूत्तरपदं यत्तस्मादूङ्। करभोरूः।

## संहित–शफ–लक्षण–वामादेश्च ४।१।७०

संहितोरूः। (सहित–सहाभ्यां च)। सहितोरूः। सहोरूः।

## शार्ङ्गरवाद्यञो ङीन् ४।१।७३

शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात्। शार्ङ्गरवी (२)। बैदी (३)।(नृनरयोर्वृद्धिश्च)।

## यङश्चाप् ४।१।७४

यङन्ताच्चाप्। आम्बष्ठ्या। कारीषगन्ध्या। (षाद्यञश्चाब्वाच्यः)। पौतिमाष्या।

## आवट्याच्च ४।१।७५

अस्माच्चाप्। यञश्चेति ङीपोऽपवादः। अवटशब्दो गर्गादिः। आवट्या (४)।

---

(१) कुरुक्षेत्रस्य राजा कुरुः, तस्यापत्यं स्त्रीति विग्रहेऽणं बाधित्वा 'कुरुनादिभ्योण्यः' इति ण्यप्रत्ययः तस्य च 'स्त्रियामवन्ति' इत्यादिना लुक्, अप्रत्ययान्तत्वेन जातित्वम्। 'उङ' प्रत्यये–कुरूः।

(२) शृङ्गरु–शब्दात् अपत्यार्थेऽणि, आदिवृद्धौ, 'ओर्गुण' इति गुणे, शार्ङ्गरवशब्दात् स्त्रियां ङीन्–शार्ङ्गरवीनित्वादाद्युदात्तम्।

(३) बिदाद्यञन्तात् ङीन्, आदिवृद्धि।

(४) अवटस्याऽपत्यं स्त्री – आवट्या, गर्गादित्वाद् यञि, चाप्, आवट्या।

यूनस्तिः ४।१।७७

युवन्शब्दात्तिप्रत्ययः । युवतिः(१) । मनुपसर्जनादित्येव–बहवो युवानो यस्यां बहुयुवा । युवतीति(२) तु यौतेः शत्रन्तान् ङीपि बोध्यम् ।

## ।। इति स्त्रीप्रत्ययाः ।।

### अभ्यासः

**प्रश्न १. अजा, इति प्रयोगः कया रीत्या सिध्यति लेख्यः**

उ०– अजत्व जातिविशिष्टा स्त्री इत्यर्थे "जातेरस्त्रीविषयादयोपधात्" इति प्राप्तं ङीषं प्रबाध्य "अजाद्यतष्टाप्" इति स्त्रीत्वबोधकेटाप्यनुबन्धलोपे सवर्णदीर्घे अजा इति जाते "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया सावनुबन्धलोपेऽपृक्तत्वे हल्ङ्याबिति हलोलोपे अजा, इति रूपम् ।

**प्रश्न २. पञ्चाजी, इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ०– पञ्चानामजानां समाहार इत्यर्थे "तद्धितार्थोत्तरपदसमाहारे च" इति समासे "संख्यापूर्वो द्विगुरिति द्विगुसंज्ञात्वे समासत्वेन प्रातिपदिकत्वात्सुपोलुकि उपसर्जनत्वे प्राक्प्रयोगेऽन्तवर्तिनीं विभक्तिमाश्रित्य नलोपः प्रातिपदिकान्तस्येति नकारलोपे दीर्घे पञ्चाज इति जाते परवल्लिङ्गत्वे प्राप्ते अकारान्तोत्तरपदोद्विगुः स्त्रियामिष्टः इति स्त्रीत्वे निर्णीतेऽपि टाब्ङीपोः प्राप्तयोः सतोः "द्विगोरिति ङीष्यनुबन्धलोपे भत्वेऽकारलोपे पञ्चाजी समुदायात्स्वादिकार्ये पञ्चाजी, इति रूपम् । अत्र अमहत्पूर्वग्रहणेन अनुपसर्जनाधिकारेण च स्त्री प्रत्ययेषु तदन्तविधिज्ञापनात्पञ्चाज शब्दादपि टाप् प्राप्नोति सत्यम्, अत्र हि समासार्थं समाहारनिष्ठं स्त्रीत्वं नतु अजशब्दवाच्यं स्त्रीत्वमतो न टाप् किन्तु ङीषेव ।

**प्रश्न ३. शूद्रा, इति प्रयोगः कया रीत्या निष्पाद्यते लेखनीयः**

उ०– शूद्रत्व जातिविशिष्टा स्त्री इत्यर्थे जातिलक्षणे ङीषि प्राप्ते तं प्रबाध्य (शूद्राचामहत्पूर्वा जातिः) इति अमहत्पूर्वशूद्रशब्दष्टापं लभते जातिश्चेद् वाच्या इत्यर्थतया जातित्वेटाप्यनुबन्धलोपदीर्घे

(१) 'युवन्' शब्दात् ऋन्नेभ्यो ङीप्, इति ङीपोऽपवादः. तिप्रत्ययः, स्वादिष्वसर्वेतिपदत्वान्नकारलोपः युवतिः ।

(२) 'यु' मिश्रणे इत्यस्माद् लटः 'शतृ' आदेशेऽदादित्वेन शपो लुकि, उवङि 'युवत्' शब्दात् उगितश्चेति ङीष्प्रत्यये 'युवती' इति ।

स्वादिकार्ये शूद्रा, इति रूपम् । महत्पूर्वकात्, शूद्रशब्दात्तुजातित्वेऽपिङीषेव न तु टाप् । पुंयोगे तु शूद्रशब्दादपि ङीषेवेति ।

**प्रश्न ४. पचन्ती, इत्यस्य साधुत्वं वर्णयत**

उ०– पच् धातोः कर्तरि लटि लटः शतरि शपि पररूपे पचत् तत्र शतृप्रत्ययः, उगित् तदन्तं पचत्– इति प्रातिपदिपदिकम् ततः, उगितश्च इति ङीप्यनुबन्धलोपे पचत् ई इति जाते "शप्श्यनोर्नित्यम्" इति नुम्यनुबन्धलोपेऽनुस्वारे परसवर्णे च पचन्ती, इति रूपम् ।

**प्रश्न ५. द्विपदी, इति प्रयोगः कथं सिध्यति वर्णनीयः**

उ०– द्वौ पादौ यस्याः, इति बहुव्रीहि समासे समासत्वेन प्रातिपदिकत्वात्सुपोलुकि प्राक्प्रयोगे संख्यासु पूर्वस्येति पादशब्दस्यान्तलोपे "पादोऽन्यतरस्याम् इति पाक्षिके ङीपि भत्वे "पादः पत्" इति पदादेशे द्विपदी स्वादिकार्ये पक्षे टापि द्विपदा, इति रूपद्वयम् ।

**प्रश्न ६. बहुराज्ञी, इत्यस्य साधुत्व प्रकारो लेख्यः**

उ०– बहवो राजानो यस्यां नगर्यामिति बहुव्रीहिः बहुराजन्, इति जाते–ऋन्नेभ्यो ङीप् इति स्त्रीत्व बोधके नान्तलक्षणे ङीपि प्राप्ते "अनो बहुव्रीहेः" इति निषेधे "डाभुभाभ्यामन्यतरस्यामि,ति पाक्षिके डापि प्राप्ते "अन उपधालोपिनोऽन्यतरस्याम्" इति पाक्षिके ङीपि अनुबन्धलोपे बहुराजन् ई इतिजाते भत्वेऽल्लोपोऽनः =इति अनोऽकारलोपे श्चुत्वे जयोर्ज्ञे समुदायात्स्वादिकार्ये बहुराज्ञी, इति पक्षे पाक्षिके डापि अनुबन्धलोपे टिलोपे च बहुराजा, रमावत्, पक्षे बहुराजा, राजन् शब्दात्, अनया रीत्या रूपत्रयम् ।

**प्रश्न ७. आर्यिका इत्यस्य सिद्धिपथं दर्शयत**

उ०– टाबन्तात्. आर्या शब्दात्स्वार्थिके क प्रत्यये "केऽणः" इति ह्रस्वे पुनः, आर्यकशब्दाट्टापि आर्यका इति जाते "प्रत्ययस्थात्कात्पूर्व स्यात इदाप्यसुपः" इति नित्ये, इत्वे प्राप्ते "उदीचामातः स्थानेयकपूर्वायाः" इति पाक्षिके, इत्वे आर्यिका समुदायात्स्वादिकार्ये पक्षे स्वादिकार्ये आर्यका, इति रूपद्वयम् ।

**प्रश्न ८. गार्ग्यायणी, इति प्रयोगो ययारीत्या निष्पाद्यते सा रीतिर्दर्शनीया**

उ०– गर्गादियञन्ताद् गार्ग्यशब्दात् "प्राचां ष्फ तद्धितः' इति पाक्षिके स्त्रीत्वबोधके ष्फे "षः प्रत्ययस्य" इति इत्वे लोपे च जाते आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति आयनादेशेभत्वेऽकारलोपे णत्वे च गार्ग्यायण इति जाते षित्वसामर्थ्यात्ष्फ उक्तेऽपि स्त्रीत्वे, उक्तार्थानामप्रयोगः' इति न्यायं बाधित्वा 'षिद्गौरादिभ्यश्चेति ङीष्यनुबन्धलोपे भत्वेऽकार-

लोपे समुदायात्स्वादिकार्ये गार्ग्यायणी, इति रूपम्। पक्षे गार्ग्य इत्यस्मात् 'य्यञश्च' इति ङीप्यनुबन्ध लोपे भत्वेऽकारलोपे "हलस्तद्धितस्येति यकारलोपे समुदायात्स्वादिकार्ये गार्गी, इति रूपद्वयम् ।

**प्रश्न ९. एनी इत्यस्य सिद्धिपथं दर्शयत**

उ०– एतत्व वर्णविशिष्टास्त्री इत्यर्थे "वर्णादनुदात्तातोपधात्तो नः" इति पाक्षिके ङीपि तत्सन्नियोगेन तकारस्य नकारोदेशे च भत्वेऽकारलोपे समुदायात्स्वादिकार्ये एनी, पक्षे एता, इति रूपद्वयम् ।

**प्रश्न १०. मातुलानि, इत्यस्य साधुत्वं दर्शयत**

उ०– मातुलस्य स्त्री इत्यर्थे "इन्द्र–वरुण–भव–शर्व–रुद्र–मृड–इत्यादिना स्त्रीत्वबोधके ङीषि नित्ये आनुगागमे च प्राप्ते "मातुलोपाध्याययोरानुग्वेति' पाक्षिके आनुकि मातुलानी पक्षे ङीषि मातुली, इति रूपद्वयम् ।

**प्रश्न ११. शूर्पणखा इत्यस्य सिद्धिपथं दर्शयत**

उ० शूर्पणखा, अत्र स्वाङ्गाच्चोपसर्जनादिति प्राप्तस्य ङीषः 'नखमुखात्संज्ञायाम्' इति निषेधे ततस्टापि सवर्णदीर्घे शूर्पनखा इति "पूर्वपदात्संज्ञायामगः" इति णत्वे विभक्तिकार्ये शूर्पणखा इति रूपम् ।

**प्रश्न १२. दाक्षी, इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ०– दक्षस्य गोत्रापत्यं स्त्री इत्यर्थे षष्ठयन्ताद् दक्षशब्दात्– "अत इञ्" इति अपत्यार्थे इञि अनुबन्धलोपे तद्धितान्तत्वेन प्रातिपदिकत्वात्सुपोलुकि भत्वेऽकारलोपे "तद्धितेष्वचा मादेरिति आदिवृद्धौ दाक्षि इति जाते गोत्रं च चरणै सह इति जातित्वे "इतो मनुष्यजाते-रिति जातित्वलक्षणे ङीषि अनुबन्धलोपे भत्वे इकारलोपे विभक्तिकार्ये दाक्षी, इति रूपम् ।

**प्रश्न १३. श्वश्रूः, इत्यस्य साधुत्वं दर्शयत**

उ०– श्वशुरस्य स्त्री इत्यर्थे पुंयोगलक्षणे ङीषि प्राप्ते तं प्रबाध्य (श्वशुरस्योकाराका-रलोपश्च) इति वार्तिकेन स्त्रीत्वबोधके ऊङि तत्सन्नियोगेन रेफात्परस्याकारस्य शकारात्परस्यो-कारस्य च लोपे संयोगे प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया स्वादिकार्ये श्वश्रूः, इति रूपम् ।

**प्रश्न १४. युवतिः, इत्यस्य साधुत्वं वर्णयत**

उ०– युवन् शब्दात् स्त्रीत्वबोधके ऋन्नेभ्योङीप्" इति नान्तलक्षणे ङीपि प्राप्तं तं प्रबाध्य "यूनस्तिः" इति तद्धितात्मके तिप्रत्यये "स्वादिष्वसर्वनामस्थाने" इति पदत्वे नलोपः

प्रातिपदिकान्तस्येति नकारलोपे युवति इति भूते कृत्तद्धितसमासाश्चेति तद्धितान्तत्वेन प्रातिपदिकत्वात्सौ ह्रस्वे विसर्गे च युवतिः, इति रूपम् ।

## अभ्यासार्थं प्रश्नाः

(१) अजा, भवन्ती, बहुराज्ञी, आर्यिका, कुरुचरी, गार्गी, कुमारी, पञ्चाश्वा, द्विदाम्नी, गृहपत्नी, सपत्नी, वृषाकपायी मनायी, रोहिता, कुण्डी, बह्वी, इन्द्राणी, ऊरुभिन्नी, चन्द्रमुखी, सकेशा, सखी, ओदनपाकी, श्वश्रूः, नारी, युवतिः, एते प्रयोगाः प्रक्रियाप्रदर्शन पुरःसरं साधु साधनीयाः ।

(२) एकपदा, कारिका, गङ्गिका, गार्ग्याणी, द्विकाण्डा, अग्नायी, नर्तकी, मृद्वी, रात्री, सुरापीती, सुजघना, दाक्षी, करभोरूः एवु प्रयोगेवु विशिष्टकार्यकारीणि सूत्राणि प्रदर्श्य तेषां कार्याणि च विलिखत ।

(३) निम्न लिखितानां सूत्राणां सोदाहरणमर्थान् विलिखत

(क) वनो र च (ख) मनः (ग) न यासयोः (घ) द्विगोः (ङ) पुरुषात् प्रमाणेऽन्यतरस्याम् (च) वाहः (छ) ऊङुतः (ञ) श्रावट्याच्च

(४) विग्रहानुसारं प्रयोगान् विलिख्य तत्र प्रवर्तमान सूत्राणि वा वार्तिकानी च विलिखत

(क) न विद्यमानं मूलं यस्याः सा
(ख) द्वौ पादौ यस्याः सा
(ग) बह्वः परिव्राजका यस्यां सा
(घ) स्त्रिय इयम्
(ङ) कुण्डमिव ऊधो यस्याः सा
(च) पूतक्रतोः स्त्री
(छ) सूर्यस्य मानुषी स्त्री
(ज) यवनानां लिपिः
(झ) दुष्टो यवः
(ञ) उलूकस्य पक्षौ इव पक्षौ यस्याः सा

(५) निम्नाङ्कितप्रयोगाणां विग्रहवाक्यानि विलिखत

(क) अतिसुत्वरी (ख) द्विपदी (ग) दाक्षिणात्यिका
(घ) सौपर्णेयी (ङ) आढ्यङ्करणी (च) द्व्याढकी

(छ) पतिमती (ज) वीरपत्नी (झ) वस्त्रक्रीती
(ञ) सुजघना (ट) बहुयुवा

(६) सत्पुष्पा, कुमार्यः, द्विकम्बल्यौ, कुण्डोघ्न्य, दृढपत्नी, मत्सी यवनानी, यवानी सुरापीता, ककेश्यः, गौरमुखी, ओदनपाकी, करभोरूः, युवतयः एतान् स्त्रीप्रत्ययांन्तशब्दान् प्रयुज्य पृथक् वाक्यानि रचयत।

(७) सकारणं संशोध्यन्तामधस्तनवाक्यानि

(क) वसन्ते कोकिल्यो भृशं कूजन्ति ।
(ख) वाराणसी बहुपरिव्राजकी नगरीत्यपि कथ्यते ।
(ग) भगवद्भक्तिर्भवसागरतारका भवति ।
(घ) ऊरुमात्राऽपि नदी सुस्तरा नैव भवति ।
(ङ) अहो आश्चर्यम् ! त्रिहायन्यापी बाला रामकथा श्रावयति ।
(च) रोहिनी बलरामस्य प्रियतमा भार्याऽऽसीत् ।
(छ) काला: कुमार्य: पवित्रान्तःकरणाः भवन्ति ।
(ज) आचार्याणी आचार्यं भृशं स्नेह्यति ।
(झ) गौरमुखी नाम्नी नर्तकी सम्यक् नृत्यति ।

## समूह गायनमा गाउने राष्ट्रिय गीत

हटने होइन डटी लडने नेपालीको बानी हुन्छ
कहिले नझुक्ने शिर उभेको स्वाभिमानी नेपाली हुन्छ
विश्वको कुना काप्चामा खोज, नेपालीको मुटुमा खोज
त्यहाँ सिङ्गो नेपाल हुन्छ, त्यहाँ राजा रानी हुन्छ...२
श्रीपेचको नवै रङ्ग डाँफे चरीले बोकेर उड्छ
एकता अनि वीरताको गाथा सारङ्गीले गाउँदै हिंड्छ
खुकुरीको डोबभित्र वीरहरूको पाइला हुन्छ
पर्वतराज हिमालमुनि गुराँस त फुलेको हुन्छ
गुराँसको रङ्ग हेर, त्यो पनि त रातो हुन्छ
हाम्रो मुटुको रगत हेर, त्यो पनि त रातो हुन्छ
रातो रङ्ग सिम्रीकको रङ्ग, चन्द्र सूर्य झण्डाको रङ्ग, त्यो पनि त रातो हुन्छ
त्यहाँ सिङ्गो नेपाल हुन्छ, त्यहाँ राजा रानी हुन्छ...२
हाम्रो मादल शान्तिको लागि मरुभूमिमा परेड खेल्छ
स्वयम्भूको दुइटा आँखाले न्याय अन्याय छुट्याई हेर्छ
बाँच र बचाऊ भन्ने छातिभित्र कुँदिएको हुन्छ
ठेला उठेको हातमा हेर, पसीना त बगेको हुन्छ
पसीनाको नदी हेर, त्यो पनि त नीलो हुन्छ
हामी माथिको आकाश हेर, त्यो पनि त नीलो हुन्छ
नीलो रङ्ग शान्तिको रङ्ग, हाम्रो झण्डाको किनारको रङ्ग, त्यो पनि त नीलो हुन्छ
त्यहाँ सिङ्गो नेपाल हुन्छ, त्यहाँ राजा रानी हुन्छ
त्यहाँ सिङ्गो नेपाल हुन्छ, त्यहाँ राजा रानी हुन्छ